


Rs. 30/-




Rs. 40/-




Rs. 30/-




Rs. 30/-




Rs. 25/-




Rs. 30/-

## CHANDAMAMA BOOKS ARE ALREADY A LEGEND! THEY OPEN A NEW HORIZON ON THE WORLD OF LITERATURE FOR THE YOUNG

Added to the six titles by **Manoj Das** is the charming seventh–

**WHEN THE TREES WALKED**

by the inimitable story-teller **Ruskin Bond**




Rs. 30/-

Among the titles in the process of production are:

**STORY OF KRISHNA**
**STORY OF RAMA**
**STORY OF BUDDHA**



For details, write to:

**CHANDAMAMA BOOKS**
Chandamama Buildings
Vadapalani, Madras - 600 026.

# वाक्यजिज्ञासा - ११

*(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति । तस्य अधः तत्सम्बद्धं विवरणं भवति । ततः अन्यत् वाक्यं, पुनः विवरणम् । एवम् अत्र क्रमः ।*

*विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते । अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते । शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः । तादृशाः वाक्येन, वाक्यद्वयेन, वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम् । तावता एव 'किं शुद्धम्' इति ज्ञायते । 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम् ।)*

४५. i) **बाल ! भवान् सुभाषचन्द्रः इव अप्रतिमदेशभक्तः भवितव्यः ।**

ii) **बाल ! भवता सुभाषचन्द्रः इव अप्रतिमदेशभक्तः भवितव्यः ।**

iii) **बाल ! भवता सुभाषचन्द्रः इव अप्रतिमदेशभक्तेन भवितव्यम् ।**

❑ **"बाल ! भवता *सुभाषचन्द्रेण* इव अप्रतिमदेशभक्तेन भवितव्यम्"** इत्येतत् वाक्यं शुद्धम् । उपरि यानि त्रीणि वाक्यानि उल्लिखितानि तेषु त्रिषु अपि दोषाः सन्ति । तृतीये वाक्ये दोषस्य अल्पता, द्वितीय-प्रथमवाक्ययोः दोषस्य आधिक्यं च अस्ति ।

भवितव्यम् इत्यत्र भावे तव्यत्प्रत्ययः । भावेप्रयोगे क्तप्रत्ययान्त-तव्यत्-प्रत्ययान्तादीनि सर्वाणि अपि रूपाणि नपुंसके एकवचने एव भवन्ति । अतः भवितव्यः/भवितव्या इत्यादीनि रूपाणि असम्भवानि । **'भवितव्यम्'** इत्येव रूपं भवेत् ।

भावेप्रयोगे कर्तृपदं तृतीयाविभक्त्यन्तं भवति । अतः पूर्वोक्तेषु वाक्येषु कर्तृपदस्य भवच्छब्दस्य तृतीया एव स्यात्, न तु प्रथमा । 'अप्रतिमदेशभक्तः' इत्येतत् पदं कर्तृपदस्य विशेषणम् । अतः विशेषणं तत् विशेष्यस्य विभक्तिम् एव अनुसरति । तस्य फलतः **'अप्रतिमदेशभक्तेन'** इति तृतीयान्तम् एव पदं प्रयोक्तव्यम् ।

**continue** Pg. NO. - 16

इवशब्दः यदा प्रयुज्यते तदा, तन्नाम सादृश्यं यत्र उच्यते तत्र, उपमानोपमेययोः समाना विभक्तिः एव स्यात् । प्रकृतोदाहरणे उपमेयभूतं पदं (अप्रतिमदेशभक्तेन भवता) तृतीयाविभक्तौ अस्ति । सुभाषचन्द्रः इत्येतत् उपमानम् । उपमेयस्य तृतीया अस्ति इत्यतः उपमानस्य अपि तृतीया एव स्यात्, न तु प्रथमा । अतः **'सुभाषचन्द्रेण'** इत्येव प्रयोगः भवेत् ।

प्रादेशिकभाषायाः प्रभावतः एतादृशवाक्येषु प्रमादाः सम्भवन्ति ।

**४६. तैः मृगाः इव अरण्ये जीवनं कृतम् ।**

❐ **"मृगैः इव"** इत्येव प्रयोगः करणीयः । मृगशब्दः अत्र उपमानम् । तच्छब्दः उपमेयम् । कर्मणिप्रयोगकारणतः उपमेयस्य तृतीयाविभक्तिः आगता अस्ति । उपमानोपमेययोः समाना विभक्तिः भवेत् खलु ? अतः मृगशब्दस्य तृतीया एव स्यात् ।

उदाहरणद्वयस्य दर्शनात् अयं निष्कर्षः प्राप्यते यत् **'इव'शब्दप्रयोग-काले विभक्तिविषये जागरूकता आवश्यकी इति ।**

**४७. सदस्यः सभायां स्वस्य वादं मण्डितवान् ।**

❐ **'वादम् उपस्थापितवान्'** इत्येव वक्तव्यं, न तु मण्डितवान् इति । मण्डयति इत्यत्र भूषणार्थकः 'मण्ड'(मडि) धातुः । उपस्थापनार्थे तस्य प्रयोगः पूर्वं कुत्रापि न कृतः । अतः स च धातुः उपस्थापनार्थं द्योतयितुम् असमर्थः इत्येव भावनीयम् । 'मण्डितवान्' इत्यस्य अर्थः भूषितवान्/अलङ्कृतवान् इति भवति । सभायां वादस्य अलङ्करणस्य न काऽपि प्रसक्तिः । सभायां वादः उपस्थाप्यते । अतः 'वादम् उपस्थापितवान्' इति प्रयोगः एव औचित्यम् आवहति ।

**४८. गते शतमाने अस्माकं देशः समृद्धः आसीत् ।**

❐ **'गते शतके'** इति प्रयोगः साधुः । वाक्येऽस्मिन् शतवर्षसमूहात्मकः कश्चन कालः निर्देष्टव्यः अस्ति । तस्य निर्देशे शतमानशब्दः असमर्थः एव । शतमानशब्दः परिमाणविशेषे क्वचित् प्रयुक्तः दृश्यते । शतजनैः पूज्यः (शतस्य=अनेकेषां मानं =पूजा यस्मिन्) इत्यर्थे अपि सः प्रयुक्तः दृश्यते । अतः शतकशब्दः एव अत्र प्रयोक्तव्यः । 'शतं परिमाणम् अस्य' (कन्) इति अर्थविवरणम् ।






# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'




## विद्यालयीयनिर्वाचनक्षेत्रे राजकीयप्रवेशः

विद्यालयेषु एकैकस्य वर्गस्य एकैकः 'वर्गनायकः' भवति । समग्र-विद्यालयस्य कश्चन 'विद्यालयनायकः' अपि भवति । आंग्लेयैः आरब्धायाः परम्परायाः अनुगुणम् एतत्सर्वं प्रचलति । वर्गाध्यापकः एव वर्षस्य निमित्तम् अर्धवर्षस्य निमित्तं वा वर्गनायकस्य चयनं करोति । वर्गनायकस्य कानिचन दायित्वानि विहितानि भवन्ति । 'वर्गनायकरूपेण अध्यापकः यदि मम चयनं कुर्यात् तर्हि वरं भवेत्' इति सर्वे छात्राः चिन्तयन्ति ।

विद्यालयनायकस्य चयनम् अध्यापकानां विशेषाधिकारः भवति । अध्यापकाः ज्येष्ठस्य कस्यचित् विद्यार्थिनः नाम मुख्याध्यापकं सूचयन्ति । *मुख्याध्यापकः यदा अनुमन्यते तदा एषा चयनप्रक्रिया समाप्ता भविष्यति ।* विद्यालयप्रतिनिधित्वं चित्ताकर्षकं भवति । अतः प्रायः सर्वे छात्राः तत् पदं प्राप्तुम् अभिलषन्ति एव ।

एषा व्यवस्था केभ्यश्चित् वर्षेभ्यः पूर्वम् उत्तमा इत्येव परिगणिता आसीत् । यतः तत्काले छात्रसङ्ख्यायाः आधिक्यस्य अभावात् एतस्याः व्यवस्थातः उत्तमं फलं प्राप्यते स्म । किन्तु एषु दिनेषु विद्यालयच्छात्रसङ्ख्या द्विसहस्रात्मिका, त्रिसहस्रात्मिका, ततोऽपि अधिका वा भवति । अतः सहजतया विद्यार्थिसङ्घटनानां प्रवेशः जातः विद्यालयेषु । अध्यक्ष-कार्यदर्शि-सहकार्यदर्शिप्रभृतीनां चयनस्य परम्परा अपि आरब्धा ।

गच्छता कालेन विद्यार्थिसङ्घटनेषु राजकीयपक्षाणां प्रवेशः जातः । तस्य परिणामतः शैक्षणिकक्षेत्रे अपि राजकीयक्षेत्रीयनिर्वाचनप्रक्रिया एव आरब्धा । ततः शान्तं शैक्षणिकक्षेत्रं प्रक्षुब्धं जातम् । बहवः विद्यालयाः, महाविद्यालयाः विश्वविद्यालयाः च इदानीं राजकीयप्रभावग्रस्ताः दृश्यन्ते ।

*शिक्षणक्षेत्रे राजकीयस्य प्रवेशः पालकानाम् अपि प्रियं न ।* ते स्वपुत्रान् अध्ययनार्थं विद्यालयं प्रति प्रेषयन्ति, न तु राजकीयव्यवहारं कर्तुम् । अतः शिक्षणक्षेत्रे राजकीयप्रवेशः यदि पालकानाम् इष्टाय न भवति तर्हि न तत्र आश्चर्यम् ।




सम्पुटः - १३ अक्टोबर् - १९९६ सञ्चिका - ७

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. - ७२.००




# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अञ्जलिः - Handfull
अभिज्ञानम् - Mark
अवतीर्णः - Come down
अवमानः - Shame
अवरोद्धुम् - To protest
आकृष्टवान् - Pulled
उत्कण्ठा - Anxiety
उपहासः - Satirical laughter
उपायनम् - Offering
उल्लङ्घ्य - To act proudly
उष्ट्रः - Camel
ऊरुः - Lap
कूपी - Bottle
कौशेयवस्त्रम् - Silk cloth
क्लेशः - Trouble
गर्दभः - Donkey
तन्तुनिर्माणम् - Spinning thread
द्रष्टारः - Spectators
निर्वाचनम् - Election
निलीय - Hiding
निष्कासितवान् - Removed

पञ्जीकरणम् - Ragistration
पितृतुल्यः - Equal to father
पुच्छम् - Tail
प्रतिवेशिनी - Neighbour (F)
मिष्टान्नम् - Grand meal
मुण्डम् - Upper part of the neck
लुण्ठनम् - To roll about
वराहः - Pig
विकृतः - Disfigured
विक्रमः - Record
विधातुम् - To furnish
विष्ठा - Exerement
विसृष्टवान् - Left
वेणीग्रथनम् - Plaiting
श्यालः - Wife's brother
सम्भाषणसमर्थः - Capable to talk
सहजता - Naturality
सोढुम् - To tolerate
स्यूतः - Bag

* * *

## वार्ताविशेषः

# द्वितीया प्रधानमन्त्रिणी

भारतस्य पार्श्वदेशस्य बाङ्गलादेशस्य प्रधानमन्त्रिणी बेगं खलिदाजिया १९९१ तः १९९६ पर्यन्तं शासनं कृतवती । फेब्रवरीमासे प्रवृत्ते निर्वाचने सा पुनः प्रधानमन्त्रिणी अभवत् । परन्तु तस्मिन् निर्वाचने प्रतिपक्षीयाणां बहिष्कारकारणात् तया त्यागपत्रं दत्तम् । जून् १२ दिनाङ्के पुनः निर्वाचनं प्रवृत्तम् । जयं प्राप्तवत्याः षेक्‌हसीनायाः नेतृत्वेन शासनम् रचितम् । षेक्‌हसीनावाजेद् बाङ्गलादेशस्य द्वितीया प्रधानमन्त्रिणी जाता ।

बाङ्गलादेशस्य 'राष्ट्रपिता' इत्येव प्रसिद्धस्य षेक् मुजिबुर्‌रहमानस्य ज्येष्ठा पुत्री षेक् हसीना । मुजिबुर् रहमानः अवामीलीग्‌पक्षस्य नेतृत्वं स्वीकृत्य पूर्वपाकिस्थानस्य स्वातन्त्र्यार्थं प्रयत्नं कृतवान् । पाकिस्थानतः इस्लामबाद्‌राजधानीकस्य भूभागस्य पृथक्‌करणार्थं शीतलसमरम् आरब्धम् । तदा सहस्रशः जनाः भारतदेशं प्रति शरणार्थिनः सन्तः आगताः । तान् स्वस्थलं प्रति प्रेषयितुं भारतदेशेन पाकिस्थानव्यवहारे प्रवेशः कृतः । १९७१ तमे वर्षे प्रवृत्तस्य इण्डो-पाक्‌युद्धस्य अनन्तरं पूर्वपाकिस्थानं स्वतन्त्रं जातम् । तदा बाङ्गलादेशः उद्‌भूतः ।



१९७२ तमे वर्षे मुजिबुर् रहमान् बाङ्गलादेशस्य अध्यक्षः अभवत् । १९७५ तमे वर्षे अगस्ट्‌मासस्य १५ दिनाङ्के मुजिबुर रहमान-कुटुम्बीयानां सर्वेषां हननं जातम् । तस्मिन् समये तस्य ज्येष्ठा पुत्री हसीना जर्मनदेशे आसीत् । अतः सा अपायात् मुक्ता अभवत् ।

१९७७ तमे वर्षे पुनः कोलाहलः आरब्धः । जनरल् जिया उल् रहमान् अध्यक्षः अभवत् । १९८१ तमे वर्षे तस्य अपि हननं जातम् । १९८२ तमे वर्षे प्रवृत्ते विद्रोहे लेफ्टिनेण्ट् जनरल् हुसेन् महम्मद् एर्षाद् अध्यक्षः भूत्वा सैनिकपालनं प्रकटितवान् । १९८६ तमे वर्षे सैनिकपालनं निवृत्तं, निर्वाचनं प्रवृत्तं च । तदा एर्षादस्य राष्ट्रियपक्षेण जयः प्राप्तः । परन्तु तत्रापि विवादः उत्पन्नः । १९९१ तमे वर्षे प्रवृत्ते निर्वाचने जिया उल् रहमानस्य पत्न्याः बेगं खलिदाजियायाः नेतृत्वेन युक्तेन बङ्गलादेश-नेषनलिस्ट्-पक्षेण अधिकारः प्राप्तः । जनरल् एर्षाद् उत्कोचं स्वीकृतवान् इति कारणतः कारागृहं प्रेषितः ।

मुजिबुर्‌रहमान् पुत्री षेक्‌हसीना १९८१ तमे वर्षे स्वदेशम् आगत्य अवामीलिग्‌पक्षस्य नायकत्वं स्वीकृतवती । अवामीलीग्‌पक्षः बङ्गलादेशसंसदि प्रतिपक्षत्वेन स्थितः आसीत् ।

जून् १२ तमे दिनाङ्के प्रवृत्ते निर्वाचने अवामीलीगपक्षेण अधिकस्थानानि (१४६) प्राप्तानि । बङ्गलादेश-नेषलिस्ट् पक्षेण ११६ स्थानानि, राष्ट्रियपक्षेण ३० स्थानानि च प्राप्तानि । बाङ्गलादेशसंसदि ३०० स्थानानि सन्ति । अतः अधिकारं निर्वोढुं येन केनापि पक्षेण निश्चितबहुमतं न प्राप्तम् । एतस्मात् अवामीलीग् इतरपक्षाणां साहाय्येन सङ्कीर्णसर्वकारम् अरचयत् । जनरल् एर्षाद् कारागृहतः एव स्वसहकारं सूचितवान् । षेक्‌हसीना २५ जनानां नूतनमन्त्रिमण्डलं रचितवती । द्वितीयप्रधानमन्त्रिणीपदम् अलङ्कृत्य प्रतिज्ञां स्वीकुर्वती षेक्‌हसीना संसदि उक्तवती - ''एषः सङ्कीर्णसर्वकारः चेदपि प्रमुखसमस्यानां निवारणे सर्वेषां सांसदानाम् अभिप्रायस्य पुरस्कारं करोति'' इति ।



# ग्रामीणा पत्नी

कमलाकरः कश्चन उत्साही तरुणः । तस्य बाल्ये एव तदीयौ मातापितरौ दिवङ्गतौ आस्ताम् । अतः सः स्वस्य मातामह्याः आश्रये वर्धितः आसीत् । सः उत्तमपदवीं प्राप्य नगरे उद्योगं कुर्वन् आसीत् । कमलाकरस्य ग्रामे तस्य अग्रजा मातामह्याः योगक्षेमं पश्यति स्म ।

एकदा कमलाकरेण त्वरितवार्ता प्राप्ता यत् मातामह्याः महान् ज्वरः, अतः भवता अनुक्षणम् आगन्तव्यम् इति । कमलाकरः सम्भ्रान्तः सन् ग्रामं गतवान् ।

ग्रामे तस्य मातामही श्वासोच्छ्वासं कर्तुम् अपि कष्टम् अनुभवति स्म । कमलाकरः आगतवान् इति वार्तां ज्ञात्वा सा नेत्रे उद्घाट्य - ''मरणात् पूर्वं भवतः विवाहः द्रष्टव्यः इति मम महती इच्छा । मम अपेक्षां शीघ्रं पूरयतु कृपया'' इति वदन्ती रुदितवती ।

ग्रामस्य कन्यां परिणेतुं कमलाकरस्य किञ्चिदपि इच्छा न आसीत् । सुन्दरीं, चतुरां नगरकन्यां परिणेतुं सः इच्छति स्म । अतः सः मातामहीम् उक्तवान् - ''भवत्याः आरोग्यं उत्तमं भवतु । अनन्तरं भवत्याः इच्छानुसारम् एव करिष्यामि'' इति ।

''वत्स ! अहम् अधिकानि दिनानि जीवामि इत्यत्र मम विश्वासः नास्ति । भवतः विवाहः द्रष्टव्यः इति एका एव इच्छा अस्ति मम । अतः श्वः एव कामाक्ष्या सह भवतः विवाहं निर्वर्तयिष्यामि'' इति मातामही उक्तवती ।

कामाक्षी तस्य प्रतिवेशिनी आसीत् । बहुभ्यः वर्षेभ्यः सा मातामह्याः आत्मीया आसीत् । यदा मातामही कामाक्ष्याः प्रस्तावं कृतवती तदा कमलाकरः किमपि वक्तुम् उद्युक्तः । तावता तस्य अग्रजा हस्तं गृहीत्वा तं बहिः नीतवती । उक्तवती च -

''कामाक्षी भवतः योग्या कन्या । मातामही तु अधिकदिनानि न जीवति । सा अस्मान् बाल्यतः पालितवती । अतः तस्याः अपेक्षा भवता अवश्यं पूरणीया'' इति ।

एवं सर्वेषाम् अनुरोधेन कमलाकरः अनिच्छन् अपि कामाक्षीं परिणीतवान् ।

अनन्तरं कमलाकरः कामाक्ष्या सह नगरं प्रति प्रस्थितवान् । तदा मातामही तम् उक्तवती - ''अस्मिन् मासे एव उभाभ्याम् अपि रामापुररामालयं गत्वा देवदर्शनं कृत्वा आगन्तव्यम्'' इति ।

मार्गे गमनसमये कमलाकरः पत्नीम् उद्दिश्य - ''भवती ग्रामस्य महिला इव नगरे मा व्यवहरतु । नगरे विभिन्नवैशिष्ट्यं दृष्ट्वा चकिता मा भवतु । मन्दस्वरेण सम्भाषणं करोतु । सर्वदा मन्दहासः एव भवतु'' इति बहुधा उपदिष्टवान् ।

विशंतिदिनाभ्यन्तरे एव कामाक्षी नगरवातावरणानुसारं स्वस्य वेषस्य, व्यवहारस्य च परिवर्तनं कृतवती । तथापि कमलाकरः अतृप्त्या - 'भवती वेणीग्रथनं सम्यक् न करोति', ''किमर्थं बृहत् तिलकं धरति भवती ?'' शाटिकां वृद्धाः यथा धरन्ति तथा धरति भवती' इति एवं सर्वदा पत्न्याः उपहासं करोति स्म । तस्मात् कामाक्षी अतीव खिन्ना आसीत् ।

नगरम् आगतयोः उभयोः मासः अतीतप्रायः । अतः कामाक्षी मातामह्याः वचनं पतिं स्मारितवती ।

तदा कमलाकरः पत्नीम् उक्तवान् - ''मातामह्याः अनारोग्यसमये, आवयोः विवाहसमये च मया विरामः स्वीकृतः ।



अस्माकम् अधिकारी स्वभावेन नाम्ना च उग्रनरसिंहः । सः इदानीं पुनरपि निश्चयेन मह्यं विरामं न दास्यति'' इति ।

कामाक्षी क्षणं यावत् विचिन्त्य - ''भवतः अधिकारिणः नाम उग्रनरसिंहः खलु । तर्हि तस्य कुलदेवः अपि उग्रनरसिंहः एव भवति । अतः 'उग्रनरसिंहस्य दर्शनं करणीयम् अस्ति' इति तं वदतु । सः निश्चयेन विरामं दास्यति'' इति पतिम् उक्तवती ।

अनन्तरदिने कमलाकरः पत्न्या यथा सूचितं तथा एव अधिकारिणम् उक्तवान् । तदा अधिकारी - ''नरसिंहस्वामी सामान्यः न । प्रथमं तस्य दर्शनं करणीयम् एव । अहं भवते विरामं दास्यामि । श्वः एव प्रस्थानं करोतु'' इति उक्तवान् ।



अनन्तरदिने प्रातः एव उभौ अपि रामापुरं प्रति प्रस्थितवन्तौ । तत्र कमलाकरः पत्न्यै सुवर्णस्य कङ्कणद्वयं दत्त्वा उक्तवान् - ''एतत् उभयमपि मम अग्रजायाः । 'रामापुरे नवीनप्रकारकाणि कङ्कणानि लभ्यन्ते । अतः एतस्य परिवर्तनं कृत्वा अन्यत् आनयतु' इति सा माम् उक्तवती आसीत् । अतः एतत् सुरक्षितं पेटिकायां स्थापयतु'' इति ।

रामापुरप्राप्तिसमये मध्याह्नः जातः । तत्र काचित् धर्मशाला आसीत् । तत्र गत्वा कमलाकरः कामाक्षी च अधिकारिणं प्रकोष्ठं पृष्टवन्तौ । परन्तु अधिकारी- ''प्रकोष्ठः रिक्तः नास्ति । सर्वे पूरिताः सन्ति'' इति उक्तवान् ।

अधिकारिणः वचनं श्रुत्वा कमलाकरेण किं करणीयम् इति न ज्ञातम् । तदा - ''रामाशास्त्री यदा यदा अस्माकं गृहम् आगच्छति स्म तदा वदति स्म यत् - 'भवन्तः रामापुरम् आगच्छन्ति चेत् मम धर्मशालायाम् एव वासं कुर्वन्तु इति'' इति कामाक्षी उक्तवती ।

रामाशास्त्रिणः नाम श्रुत्वा अधिकारी सम्भ्रान्तः सन् - ''एकः प्रकोष्ठः रिक्तः अस्ति । तत् मया विस्मृतम् आसीत्'' इति वदन् अनुक्षणम् एव ताभ्यां एकं प्रकोष्ठं दत्तवान् ।

''रामाशास्त्री नाम कः ?'' इति कामाक्षीं पृष्टवान् कमलाकरः ।

''स्वस्य पितुः स्मरणार्थं रामाशास्त्री एव एतां धर्मशालां निर्मापितवान्'' इति कामाक्षी उक्तवती ।

''एतं विचारं भवती कथं जानाति ?'' इति आश्चर्येण पृष्टवान् कमलाकरः ।

''अन्तः आगमनसमये अहं भवनस्य पुरतः नामफलकं दृष्टवती'' इति वदन्ती कामाक्षी हसितवती ।

तस्याः समयस्फूर्तिं दृष्ट्वा कमलाकरः आश्चर्यचकितः । अनन्तरम् उभौ अपि स्नानादिकार्यं समाप्य मन्दिरं यावत् प्राप्तवन्तौ तावता मन्दिरस्य अर्चकः द्वारं पिधातुम् उद्युक्तः आसीत् । सः तौ उक्तवान् - ''इतः परं सायम् एव देवस्य दर्शनार्थम् अवकाशः'' इति ।

''मया एकस्य एव दिनस्य विरामः प्राप्तः अस्ति । इदानीं किं करणीयम् ?'' इति कमलाकरः कामाक्षीं पृष्टवान् ।

तदा कामाक्षी यथा अर्चकः शृणुयात्

तथा उक्तवती - ''अस्माकं देवदर्शनभाग्यं न स्यात् । भवतु नाम । सर्वं भगवतः इच्छा । किम् अधिकचिन्तनेन ? मातामह्या यत् उपायनं दत्तं तत् बहिः विद्यमाने करण्डके स्थापयित्वा गच्छाम'' इति ।

'बहिः समर्पणपात्रे स्थापितं धनं देवालयकार्यार्थम् उपयुक्तं भवति । नीराजनपात्रे यत् धनं स्थाप्यते तद् अर्चकः उपयोक्तुम् अर्हति' इति जानती कामाक्षी एवम् उक्तवती आसीत् । 'उपायनम्' इति शब्दस्य श्रवणसमनन्तरम् एव पुनः अर्चकः द्वारम् उद्घाटयन् - ''आगच्छन्तु ! बहुदूरतः आगताः स्युः भवन्तः । देवदर्शनं कृत्वा एव गच्छन्तु'' इति उक्तवान् ।

तृप्त्या देवदर्शनं कृत्वा, समर्पणधनं नीराजपात्रे स्थापयित्वा पत्या सह बहिः आगतवती कामाक्षी ।

''भवत्याः कारणतः मातामह्याः इच्छा पूरिता । मातामह्या किं दत्तम् आसीत् ?'' इति पृष्टवान् कमलाकरः ।

तदा कामाक्षी हसन्ती उक्तवती - ''तत्र अन्यत् किमपि न आसीत् । केवलं वर्तिकाः आसन् । तासाम् उपयोगः तु सम्यक् एव कृतः'' इति ।

उभौ अपि वीथ्याम् आगच्छन्तौ आस्ताम् । तत्रैव मार्गपार्श्वे विद्यमानान् सुवर्णापणान् प्रदर्शयन् कमलाकरः कामाक्षीम् उक्तवान् - ''भवती धर्मशालां गत्वा सुवर्णकङ्कणद्वयम् अपि आनयतु । तावति काले अहं नूतनं कङ्कणं पश्यन् भवामि'' इति ।

कामाक्षी धर्मशालां गत्वा पेटिकातः



कङ्कणं निष्कास्य यदा पश्यन्ती आसीत् तदा कश्चित् युवकः तत्र आगतवान् । ''अहं सुवर्णापणे एव कार्यं करोमि । अचिरात् आपणः पिहितः भविष्यति । आपणस्य स्वामी - 'शीघ्रं कङ्कणम् आनयतु' इति मां प्रेषितवान्'' इति सः उक्तवान् ।

तस्य वचनं श्रुत्वा कामाक्ष्याः संशयः आगतः । सा तम् उक्तवती - ''कङ्कणैः सह चन्द्रहारम् अपि परिवर्त्य ददाति वा इति भवान् स्वामिनं पृष्ट्वा आगच्छतु'' इति

सः युवकः किञ्चित्कालानन्तरम् आगत्य - ''स्वामी सूचितवान् यत् चन्द्रहारम् अपि आनयतु इति'' इति उक्तवान् ।

अनुक्षणं कामाक्षी - ''भोः ! वञ्चक ! इदानीम् अहं रक्षकभटान् आह्वयामि'' इति

उच्चस्वरेण उक्तवती ।

सः वञ्चकः तस्याः वचनं श्रुत्वा ततः धावितवान् । 'वीथ्यां पत्या उच्चैः उक्तम् आसीत् यत् धर्मशालां गत्वा कङ्कणम् आनयतु इति, तत् श्रुत्वा एव एषः वञ्चकः आगतवान्' इति कामाक्षी ज्ञातवती ।

अनन्तरं कमलाकरः प्रवृत्तं सर्वं श्रुत्वा पत्न्याः चातुर्यं श्लाघितवान् ।

एवं सर्वाणि कार्याणि एकस्मिन् दिने एव समाप्य उभौ अपि यदा ग्रामं प्राप्तवन्तौ तदा अन्धकारः प्रसृतः आसीत् । तयोः गृहस्य द्वारस्य तालः न दृष्टः । अन्तः कोऽपि अस्ति इति तौ ज्ञातवन्तौ । 'चोरः चोरः' इति आक्रोशनं कर्तुं यावत् कमलाकरः उद्युक्तः तावता कामाक्षी 'तूष्णीं तिष्ठतु' इति पतिम् अभिनयेन सूचितवती । ततः सा द्वारं ताडयन्ती - ''स्वामिन् ! वयं प्रयाणिकाः स्मः । इदानीम् अन्धकारः प्रसृतः अस्ति । अस्माकं समीपे आभरणानि सन्ति । अस्यां रात्रौ भवतः गृहे आश्रयं ददाति चेत् प्रातः वयम् इतः गच्छेम'' इति उक्तवती ।

अनुक्षणम् एव कश्चित् युवकः वातायनात् बहिः मुखं प्रसार्य एतौ परीक्षादृष्ट्या दृष्ट्वा आगत्य द्वारम् उद्घाटितवान् । कामाक्षी तस्मै स्वहस्ते स्थितां पेटिकां दत्त्वा - ''एतस्यां धनम्, आभरणं च अस्ति । एतत् सुरक्षितं स्थापयतु । प्रातः एतत् नेष्यामि'' इति उक्तवती ।

सः युवकः अङ्गीकारपूर्वकं शिरः चालयन् प्रार्श्वस्थं प्रकोष्ठं गतवान् । अनुक्षणम् एव कामाक्षी प्रकोष्ठस्य द्वारं पिधाय कीलितवती । अनन्तरं सा कमलाकरम् उक्तवती - ''यदि पूर्वम् एव चोरः इति आक्रोशः कृतः स्यात् तर्हि चोरः अन्यद्वारेण पलायितवान् स्यात् । इदानीं ग्रामप्रमुखम् आनयतु भवान्'' इति ।

पत्न्याः समयस्फूर्तिं दृष्ट्वा आश्चर्यचकितः कमलाकरः तस्याः हस्तद्वयम् अपि गृहीत्वा आनन्देन - ''भवती ग्राममुग्धा, बुद्धिहीना इति अहं भवतीम् उपहसितवान् । परन्तु भवती नगरमहिलायाः अपेक्षया अपि अधिकबुद्धिमती अस्ति । भवत्याः परिणयात् मम जीवनं सार्थकं जातम्'' इति वदन् ग्रामप्रमुखम् आनेतुं गतवान् ।





# प्रियतमं स्थलम्

श्रीरङ्गपुरं नाम महत् यात्रास्थलम् आसीत् । तत्र परमशिवस्य मन्दिरं, सुन्दरं वृन्दावनं, नृत्यशाला च आसीत् । नृत्यशालायाम् आदिनं सङ्गीतं, नृत्यप्रदर्शनं च प्रचलति स्म । ग्रन्थालये अनेके अपूर्वाः ग्रन्थाः आसन् ।

एतत् सर्वं द्रष्टुं नरसिंहः श्रीरङ्गपुरम् आगतवान् । तस्मिन् ग्रामे नरसिंहस्य ज्येष्ठपितृव्यः रामः वसति स्म । रामस्य चन्द्रः, सूर्यः, गोपालः, विश्वनाथः चेति चत्वारः पुत्राः आसन् । ज्येष्ठपुत्रः चन्द्रः नरसिंहस्य समवयस्कः आसीत् । एते चत्वारः सहोदराः अपि नरसिंहस्य आगमनेन सन्तुष्टाः सन्तः तस्मै ग्रामे विद्यमानानि विशेषस्थलानि दर्शितवन्तः ।

सर्वं दृष्ट्वा नरसिंहः तान् सहोदरान् उक्तवान् - ''भवतां ग्रामः अतीव सुन्दरः अस्ति । अत्रैव बहुदिनानि यावत् वासं कर्तुम् इच्छामि'' इति ।

एतत् श्रुत्वा ते अपि आनन्देन तं पुनः पुनः पृष्टवन्तः - ''अस्मिन् ग्रामे भवतः इष्टतमं स्थलं किम् ?'' इति ।

तदा नरसिंहः - ''यत् स्थलम् अधिकम् इष्टं भवति तस्मिन् स्थले अधिकदिनानि तिष्ठामः । वस्तुतः किम् इष्टं स्थलम् इति कदाचित् अस्माभिः एव ज्ञातुं न शक्यते । भवन्तः चत्वारः अपि दिनचतुष्टयं यावत् इष्टतमे प्रदेशे वासं कृत्वा आगच्छन्तु । भवन्तः यत्र अधिकदिनानि स्थास्यन्ति तदेव भवताम् इष्टं स्थलम् इति अहं भावयिष्यामि । अनन्तरं मम इष्टं स्थलं किम् इति वदिष्यामि'' इति तान् उक्तवान् ।

एतत् वचनम् अङ्गीकृत्य सहोदराः सर्वे चत्वारि दिनानि यावत् चतुर्षु स्थलेषु स्थित्वा आगतवन्तः । तदा तैः एकः अंशः ज्ञातः यत् यथा स्वस्थले तथा अन्यस्थलेषु

अपि आकर्षकता भवति एव इति । यत्र ते गतवन्तः आसन् तत्र पूर्वनिश्चितात् अपि अधिककालं स्थित्वा आगतवन्तः आसन् । यतः तेषां स्थलानाम् आकर्षणीयतया ते विशेषतः आकृष्टाः आसन् ।

एतत् ज्ञात्वा नरसिंहः - ''पश्यन्तु ! सर्वत्र अपि काचित् विशेषता भवति एव । विशालं हृदयम् अस्ति चेत् सर्वम् अपि सुन्दरं दृश्यते । सर्वम् अपि प्रियतमं भवति'' इति उक्तवान् ।

''एतादृशवचनैः भवान् प्रियतमस्य स्थलस्य कथनात् आत्मानं च्यावयितुं न अर्हति । अथवा एवं भवतु, भवान् अपि अस्माभिः गतानि स्थलानि सर्वाणि दृष्ट्वा आगच्छतु । यत् स्थलं भवते विशेषतः रोचते तत्र अधिककालं वसतु अपि । तदेव भवतः इष्टतमं स्थलम् इति भावयामः वयम्'' इति उक्तवन्तः सहोदराः ।

''मह्यं तु एषः ग्रामः एव अरोचत । अत्रैव कानिचन दिनानि स्थितवान् अस्मि अपि । अतः किम् अन्यस्थलानि प्रति गमनेन ? प्रियतमं स्थलं किम् इति परीक्षणेन वा ?'' इति उक्तवान् नरसिंहः ।

चन्द्रः मन्दिरे, सूर्यः वृन्दावने, गोपीनाथः नृत्यशालायां, विश्वनाथः ग्रन्थालये च प्रायः दिनस्य अधिकं कालं यापयन्ति स्म । अतः ते नरसिंहस्य वचनं सुस्पष्टं न ज्ञातवन्तः । तदर्थं ते नरसिंहम् उक्तवन्तः - ''भवतः कथनस्य आशयः अस्माभिः सम्यक् न ज्ञातः'' इति ।

तदा नरसिंहः मन्दहासपूर्वकम् उक्तवान् - ''यथा एतस्मिन् नगरे कानिचन वैशिष्ट्यानि सन्ति तथैव अन्यत्रापि सन्ति एव । तावदेव न, अत्र यत् वैशिष्ट्यम् अस्ति ततोऽपि श्रेष्ठम् एव अन्यत्र भवितुम् अर्हति । सर्वश्रेष्ठं किमपि अत्र अस्ति इति चिन्तयित्वा न, अपि तु पितृव्यस्य प्रीतिं, पितृव्यायाः वात्सल्यं, भवतां स्नेहं च प्राप्तुम् अहम् अत्र आगतवान् । वयं सर्वत्र सञ्चरन्तः अपि गृहे एव वासं कर्तुम् इच्छामः, गृहे एव अधिकं कालं यापयामः च । गृहम् एव प्रियतरं स्थलं सर्वेषाम् अपि । अतः ममापि प्रियतमं स्थलं भवतां गृहम् एव, न अन्यत्'' इति ।

एतत् श्रुत्वा ते सहोदराः सन्तोषेण अङ्गीकारपूर्वकं शिरः चालितवन्तः ।






# १४

[रूपधरस्य पुत्रः धीरमतिः पितरम् अधिकृत्य विषयस्य सङ्ग्रहार्थं पैलास्नगरं गतवान् । मारणार्थम् उपायं रचयित्वा प्रतीक्षमाणेभ्यः दुष्टेभ्यः आत्मानं रक्षन् सः वराहपालकस्य गृहं गतवान् । तत्र पिता रूपधरः तेन दृष्टः । ततः उभौ मिलित्वा शत्रुसंहारार्थम् उपायं चिन्तितवन्तौ । शत्रुसंहारार्थं धीरमतिना किं किं करणीयम् इति विस्तरेण उक्तवान् रूपधरः । तदनन्तरम् ....]

प्रातः उत्थाय धीरमतिः नगरम् उद्दिश्य प्रयाणम् आरब्धवान् । प्रस्थानसमये सः वराहपालकम् उक्तवान् - ''आर्य ! माता उत्कण्ठया मां प्रतीक्षते । अतः अहम् इदानीम् इतः प्रस्थितः । भिक्षया उदर-पूरणम् एतस्य वृद्धस्य वृत्तिः । अतः एषः नगरं यदि आगच्छेत् तर्हि एव वरं भवेत् । नगरे भिक्षाप्राप्तिः न क्लेशकरी'' इति ।

''सत्यं वत्स ! अहम् अपि अत्र स्थातुं न इच्छामि । यः भिक्षां याचते तस्य कथं स्वगृह-परगृहभेदः ? भवान् गच्छतु तावत् । अहम् अग्निपार्श्वे उपविश्य शरीरे औष्ण्यम् उत्पाद्य आतपोदयानन्तरम् एतेन सह प्रस्थाय नगरं प्राप्स्यामि । पश्यतु, एतानि मम वस्त्राणि छिन्नानि सन्ति । शैत्यबाधातः मम रक्षणे सर्वथा असमर्थानि एतानि । अतः आतपप्रसारानन्तरम् एव मम प्रयाणस्य आरम्भः भविष्यति'' इति धीरमतिम् उक्तवान् वृद्धवेषधारी रूपधरः ।

धीरमतिः 'मम गृहे वसतां दुष्टानां



संहारार्थं यत् युद्धं प्रचलेत् तत् कीदृशं भवेत् ?' इत्येवं चिन्तयन् आसीत् प्रयाणसमये । गृहं प्राप्य सः शूलम् एकत्र स्थापयित्वा अन्तः गतवान् । दास्यः दासाः च तं दृष्ट्वा अतीव आनन्दम् अनुभूतवन्तः ।

अत्रान्तरे अट्टात् आगच्छन्ती पद्ममुखी पुत्रं दृष्टवती । आनन्दातिरेकेण - 'वत्स !' इति वदन्ती अधः आगता सा पुत्रं प्रीत्या दृढम् आलिङ्ग्य - ''आगतः खलु भवान् ! भवतः पुनर्दर्शनं भवेत् वा न वा इति चिन्तयन्त्याः मम मनः चिन्ताकुलम् आसीत् । पितुः वार्तां ज्ञातुम् इच्छन् भवान् माम् अपि अनुक्त्वा पैलास् प्रति गतवान् । किं कापि वार्ता ज्ञाता ?'' इति पृष्टवती ।

''अम्ब ! मया अनुक्त्वा गतम् इति तु सत्यम् एव । किन्तु इदानीं सकुशलं प्रत्यागतवान् अस्मि एव खलु ? अतः अलं खेदेन । पितुः विषये यत् ज्ञातं तत् अनन्तरं वदिष्यामि । प्रकृतं भवती स्नात्वा इष्टसिद्धिनिमित्तं भगवदाराधनं करोतु । अत्रान्तरे अहं नगरस्य अन्तर्भागं गत्वा आगमिष्यामि । पैलास्तः प्रत्यागमनसमये मया सह कश्चन अतिथिः अपि आगतः अस्ति । तस्य सत्कारादिविषयम् अपि चिन्तयतु भवती'' इति उक्तवान् धीरमतिः ।

सः अतिथिः कश्चन कालज्ञानी आसीत् । यदा धीरमतिः पैलास्तः प्रस्थितः तदा सः उक्तवान् आसीत् यत् माम् अपि नौकायां नयतु इति । आर्द्रहृदयः धीरमतिः तम् आत्मना सह आनीतवान् आसीत् । मध्येमार्गं धीरमतिः यदा वराहपालकवसतिं गतवान् तदा सः कालज्ञानी नाविकैः सह एतत् नगरं प्राप्तवान् आसीत् ।

पद्ममुखी स्नानं समाप्य शुभ्रवस्त्राणि धृत्वा - 'शत्रुसंहारः निर्विघ्नं यथा प्रचलेत् तथा वरेण अनुगृह्णातु' इति भगवन्तं भक्त्या प्रार्थितवती आसीत् ।

तत्समये धीरमतिः भवनात् निर्गत्य शूलायुधं गृहीत्वा प्रियेण शुनकेन सह प्रस्थाय नगरं प्रविष्टवान् । तत्समये तं दृष्टवन्तः ते दुष्टाः तं परितः स्थित्वा कृत्रिमस्नेहं प्रदर्शयन्तः तस्य योगक्षेमादिकं विचारितवन्तः । किन्तु तेषाम् अन्तरङ्गे तु द्वेषाग्निः ज्वलति स्म एव । धीरमतिः विनयेन एव व्यवहरन् अल्पे एव काले तेभ्यः विमोचनं प्राप्य मित्राणां पितुः अभिमानिनां च समीपं गतवान् । तैः पृष्टानां प्रश्नानाम् उत्तरं यथायोग्यं दत्तवान् ।

अनन्तरं नाविकनायकः अतिथिना सह तत्र आगतवान् । सः धीरमतिम् उक्तवान् - "आर्य ! प्रतापेन दत्तानि उपायनानि मम गृहे सन्ति । सेवकानां द्वारा तानि आनाययतु भवान्" इति ।

"मम गृहे स्थिताः ते दुष्टाः कदा मम मुण्डं रुण्डात् पृथक्कुर्वन्ति इत्येव मया न ज्ञायते । एवं स्थिते गृहं प्रति तेषाम् उपायनानां नयनेन किं प्रयोजनम् ? किं जानता अपि मया तानि दुष्टाधीनानि करणीयानि? सद्यः तानि वस्तूनि भवतः गृहे एव भवन्तु । यदा अहं पीडातः मुक्तः भविष्यामि तदा भवान् एव तानि मम गृहं प्रापयतु" इति सूचितवान् धीरमतिः ।

अनन्तरं सः अतिथिना सह स्वगृहं गतवान् । स्वागतप्रकोष्ठे रत्नकम्बलानि प्रसारितानि आसन् । तत्र अतिथिम् उपवेश्य पानीयं दत्तवान् धीरमतिः । स्नानादीनाम् अनन्तरं धरणार्थम् उत्तमानि वस्त्राणि अपि दत्तानि । ततः उभौ अपि भोजनार्थम् उपविष्टवन्तौ । तयोः भोजनसमये पद्ममुखी स्तम्भम् आलम्ब्य अभिमुखम् उपविश्य तन्तुनिर्माणे उद्युक्ता अभवत् ।

भोजनानन्तरं सा पुत्रम् उक्तवती - "वत्स ! दुष्टानाम् आगमनात् पूर्वम् एव पितुः वार्ता मां श्रावयतु तावत्" इति ।

"मया आदौ पैलासं प्रति गतम् । तत्र नवद्योतस्य मेलनं कृतम् । सः तत्पुत्राः च मां प्रेम्णा आदरेण च स्वागतीकृत्य सत्कृतवन्तः । किन्तु ते पितुः विषयं किञ्चिदपि न जानन्ति । ततः अहं नवद्योतपुत्रेण सह प्रतापस्य वासस्थानं



गतवान् । मम मुखात् अत्रत्यं सर्वं श्रुत्वा प्रतापः उक्तवान् - 'यदा भवतः पिता प्रत्यागमिष्यति तदा एते दुष्टाः यमसदनस्य अतिथयः भविष्यन्ति' इति । सः एतदपि उक्तवान् यत् समुद्रे प्रयाणं कुर्वन् रूपधरः द्वीपस्थेन मया कदाचित् दृष्टः इति कश्चन वृद्धः माम् उक्तवान् इति । ततः अहम् अत्र प्रत्यागतवान् । इतोऽप्यधिकवार्ता कापि नास्ति" इति उक्तवान् धीरमतिः ।

एतत् श्रुत्वा सः अतिथिः पद्ममुखीम् उद्दिश्य - "अम्ब ! वस्तुस्थितिम् अहं वदामि, शृणोतु । भवत्याः पतिः एतावता एव एतं देशम् आगतवान् अस्ति । अत्र यद्यत् प्रवर्तमानम् अस्ति तत्सर्वं जानाति एव सः । एतेषां दुष्टानां संहारं सः एव करिष्यति इति वदति मम अन्तरङ्गम्" इति उक्तवान् ।

''श्रीमन् ! यदि भवतः वचनम् अवितथं भवेत् तर्हि भवान् यत् याचेत तत् अहं दास्यामि'' इति उक्तवती पद्ममुखी ।

एवं ते त्रयः यदा वार्तालापं कुर्वन्तः आसन् तत्काले ते दुष्टाः भवनस्य पुरतः प्राङ्गणे विविधव्यायामेषु निमग्नाः आसन् । केचन भारोन्नयनस्य अभ्यासं कुर्वन्तः आसन् । पुनः केचन शूलायुधस्य प्रयोगस्य अभ्यासं कुर्वन्तः आसन् ।

अत्रान्तरे सेवकमुख्यः तत्र आगत्य तान् उक्तवान् - ''आर्याः ! भोजनसमयः उपस्थितः अस्ति । कृपया भोजनशालाम् आगच्छन्तु भवन्तः'' इति ।

सर्वे झटिति व्यायामादिकं परित्यज्य भोजनशालां गत्वा आसनेषु उपविष्टवन्तः । मृगयाद्वारा प्राप्तानां पशूनां पक्षिणां च मांसेन पाकः सज्जीकृतः आसीत् । आतृप्ति भोजनं कृतवन्तः ते ।

तत्काले एव वराहपालकः रूपधरम् उक्तवान् - ''आवाभ्यां नगरं प्रति गन्तव्यं खलु ? उत्तिष्ठतु, गच्छाम । एतावता एव विलम्बः जातः स्यात्'' इति ।

मार्गे सञ्चारार्थम् एकं दृढं दण्डं गृहीत्वा स्यूतं च स्कन्धे आरोप्य रूपधरः वराहपालकेन सह प्रस्थितवान् । वराहपालकः मार्गदर्शकः इव अग्रे गच्छन् आसीत् । रूपधरः निर्गतिकः भिक्षुकः इव व्यवहरन् दण्डम् अवलम्ब्य वृद्धः इव सञ्चरन् वराहपालकम् अनुसृतवान् ।

यदा तौ जलपातसमीपं गतवन्तौ तदा अजपालकः कालनामकः अभिमुखम् आगतवान् । सः रूपधरं दृष्ट्वा तिरस्कार-मिश्रितेन स्वरेण - ''अये वराहपालक ! भवता सह स्थितः भिक्षुकः अयं कः ? प्रजापीडकाः, भूभारभूताः एते निर्दयं नाशनीयाः । रूपधरगृहवासिनः एव एतेषां



दण्डने समर्थाः । वराकाः एते दैन्यं प्रदर्शयन्तः जनानाम् अनुकम्पं प्राप्नुवन्तः उदरं पोषयन्ति । एतेषां निग्रहीतारः एव न सन्ति । धिक् एतान्'' इति उक्त्वा रूपधरं बलात् पादेन प्रहृतवान् ।

एतेन रूपधरस्य कोपः प्रवृद्धः । 'हस्तस्थेन दण्डेन एतस्य शिरः भञ्जनीयम्' इति सकृत् चिन्तितवान् सः । किन्तु तथा कर्तुम् एषः न समयः इति स्मरन् सः कोपं कष्टेन निगृह्य मौनम् आश्रितवान् ।

वराहपालकः अजपालकस्य व्यवहारं दृष्ट्वा आश्चर्यम् अनुभवन् - ''कीदृशः कालः आगतः, येन भवादृशानाम् अपि मदः आगतः । अस्माकं स्वामी यदा आगमिष्यति तदा भवतां मदः अपगमिष्यति'' इति उक्तवान् ।

''परलोकं गतः कथं वा प्रत्यागच्छेत् ? रूपधरः प्रत्यागमिष्यति इति तु भवतां भ्रमः । रूपधरः इव धीरमतिः अपि यदि परलोकं गच्छेत् तर्हि सर्वं सुष्ठु भवेत् । तद्गृहवासिनः महान्तः तं निश्चयेन परलोकं गमयिष्यन्ति'' इति उक्त्वा कालः अज-मेषादीन् ध्वनिना प्रेरयन् ततः निर्गतवान् ।

सः यान् अजान् मेषान् च नयन् आसीत् ते रूपधरगृहवासिनां दुष्टानां भोजनार्थम् एव । तम् अनुसरन्तौ वराहपालकः रूपधरश्च अग्रे गतवन्तौ ।

रूपधरः गृहं प्राप्य तत् स्वगृहम् एव इति अभिजानन् अपि अजानन् इव व्यवहरन् - ''एतत् गृहं रूपधरस्य एव स्यात् । एतादृशम् अपूर्वं गृहम् अन्यस्य कस्य भवितुम् अर्हति, ऋते रूपधरात् !



उत्तमपाकगन्धः तु दूरात् एव आघ्रायते'' इति उक्तवान् ।

''अये, पाकगन्धविषये चिन्तनं अनन्तरं भवतु । इदानीम् आवाभ्यां किं करणीयम् इति आदौ चिन्तयतु । भवान् आदौ अन्तः गच्छति, उत अहम् अन्तः गच्छामि ? एवम् एव तिष्ठावः चेत् कश्चित् आगत्य आवां दूरं प्रेषयेत्'' इति उक्तवान् वराहपालकः ।

तौ यदा एवं वार्तालापं कुर्वन्तौ आस्तां तदा पार्श्वस्थभित्तिखण्डस्य उपरि शयनं कृतवान् कश्चन शुनकः मुखम् उन्नीय कर्णौ उन्नमय्य रूपधरम् अपश्यत् । सः कश्चन मृगयाचतुरः शुनकः । तस्य नाम कान्तिः इति । यदा सः शिशुः आसीत् तदा रूपधरः एव तम् आनीय पोषितवान् आसीत् । तस्य तारुण्यप्राप्तितः पूर्वम् एव रूपधरः युद्धार्थं

निर्गतः आसीत् । अनन्तरं कान्तेः पालनपोषणादिविषये कोऽपि विशेषावधानं न दत्तवान् आसीत् । गच्छता कालेन वार्धक्यं प्राप्तवान् सः रोगैः ग्रस्तः सन् इदानीं मरणं प्रतीक्षमाणः आसीत् । रूपधरम् अभिजानन् सः स्नेहभावं प्रदर्शयन् पुच्छम् अचालयत् । किन्तु तस्य शरीरे शक्तिः न आसीत् इत्यतः सः उत्थातुं न अशक्नोत् ।

तस्य दुरवस्थां दृष्टवति रूपधरे महती करुणा उत्पन्ना । सः तं प्रीत्या पश्यन् वराहपालकम् उद्दिश्य - ''दर्शनात् तु भासते यत् एषः उत्तमजातीयः शुनकः इति । किमर्थम् एतादृशी दुरवस्था एतस्य ? इदानीम् एषः साहाय्यं किमपि कर्तुम् असमर्थः इत्यतः एषा स्थितिः वा एतस्य ?'' इति पृष्टवान् ।

''स्यात् तथा । एतस्य स्वामी यदा जीवति स्म तदा एतस्य उत्तमस्थितिः आसीत् । मृगयायां सदा अग्रगामी भवति स्म एषः एव । स्वामिनः दृष्टिक्षेपात् अपि एषः जीवनस्य सार्थकताम् अनुभवति स्म । इदानीम् एतस्य स्वामी कुत्र कथम् अस्ति इति न ज्ञायते । एषः तु दिनानि गणयन् मरणं प्रतीक्षमाणः तिष्ठति'' इति उक्त्वा वराहपालकः प्रासादस्य अन्तः गतवान् । स्वामिनः दर्शनात् पूरिताभिलाषः शुनकः अनन्तरक्षणे एव तृप्त्या प्राणान् अत्यजत् ।

वराहपालकस्य आगमनं दूरात् एव ज्ञात्वा धीरमतिः शिरश्चालनेन 'आगच्छतु' इत्येतं भावं सूचितवान् । सः अग्रे गत्वा धीरमतेः पुरतः उपविष्टवान् । रूपधरः तु दण्डस्य अवलम्बनेन मन्दगत्या चलन् अन्तः आगत्य द्वारस्य पार्श्वे उपविष्टवान् ।

धीरमतिः पार्श्वस्थां रोटिकां व्यञ्जनं च वराहपालकाय दत्त्वा - ''एतत्सर्वं तस्मै ददातु । यथा मत्तः तथा अन्येभ्यः अपि आहारं प्राप्नोतु सः'' इति उक्तवान् ।

रूपधरः वराहपालकात् रोटिकां व्यञ्जनं च प्राप्य - ''देवः स्वामिनं दीर्घायुष्मन्तं करोतु । स्वामिनः सर्वाः अपेक्षाः पूरिताः भवन्तु'' इति आशीर्वादं कृतवान् ।

ततः सः तत्र प्राप्तम् आहारं भुक्त्वा भोजनशालां गत्वा पङ्क्तौ उपविष्टवतां दुष्टानां पुरतः स्थित्वा एकैकम् अपि आहारं याचितवान् । - (अनुवर्तते)



# र स वा र्ताः

## एवरेस्ट्विशेषाः

पर्वतारोहणे तरुण-तरुणीनाम् अतीव उत्साहः सन्तोषः च भवति । एन्.सि.सि. पाठ्यक्रमे विद्यार्थिनां कृते पर्वतारोहणशिक्षणम् अपि दीयते । 'पर्वतारोहणम्' इत्येतस्य पदस्य श्रवणमात्रेण प्रपञ्चस्य अत्युन्नतपर्वतस्य (८,८४७ मी.) एवरेस्ट्शिखरस्य स्मरणं भवति । एवरेस्ट्-शिखरारोहणार्थं न केवलं शक्तिः, उत्साहः च पर्याप्तः, अपि तु धनम् अपि आवश्यकम् । १०,००० डालर्स् (तन्नाम ३,५०,००० रूप्यकाणि) तदर्थं व्ययीकरणीयानि । एतत् धनं नेपालसर्वकाराय दातव्यम् । प्रपञ्चस्य उन्नताः अष्ट पर्वताः नेपाल्देशे एव सन्ति । एतस्मिन् समये एकस्य एव पर्वतस्य आरोहणं प्राधान्येन प्रचलति । एतस्मिन्वर्षे ८० गणा तत् शिखरम् आरोढुम् उद्युक्ताः आसन् । तेषु ५७ गणाः शिखराग्रं प्राप्तवन्तः सन्ति । तेषु 'एवरेस्ट्' नायकस्य तेन्सिंगस्य प्रौत्रः त्रिंशद्वर्षीयः जाङ्लिङ्नार्गे अन्यतमः । तेन सह फिन्ले ब्रिषर्स्, एडमण्ड् कार्ल, विस्टर्स, चेति त्रयः अपि सन्ति । एते तृतीयवारम् एवरेस्ट् आरोहणं कृतवन्तः सन्ति । १९९२ तमे वर्षे ५८ जनाः एवरेस्ट्शिखरस्य आरोहणं कृतवन्तः आसन् । अनन्तरवर्षे एकस्मिन् दिने एव ३५ जनाः शिखराग्रं प्राप्तवन्तः । एतस्मिन् वर्षे ६४,००० डालर्स् व्ययः पर्वतारोहिभिः व्ययितः स्यात् इति परिभाव्यते । पर्वतारोहिणां सङ्ख्या वर्षे वर्षे वर्धमाना अस्ति इत्यतः एकैकेन गणेन अपि निश्चिते मार्गे एव गन्तव्यम् इति नियमः कृतः अस्ति । पर्वतारोहिभिः यत् अनपेक्षितं वस्तु क्षिप्यते तत् स्वच्छीकर्तुं षेर्पाजनाः नियुक्ताः सन्ति । ते एतावता एव २०० कि.ग्रा. अवकरान् ततः दूरीकृतवन्तः सन्ति । ''इतोऽपि १५,००० कि.ग्रा. अवकाराः अवशिष्टाः स्युः तत्र ''इति वदति स्वच्छीकरणनायकः ।

## कूप्यां सन्देशः

दक्षिण-इङ्ग्लेण्ड्रेजीसप्रदेशे विक्कीथामस्-नामिका बालिका अस्ति । सा वर्षत्रयात् पूर्वं एकां चिटिकां लिखित्वा एकस्यां कूप्यां स्थापितवती । समुद्रे क्षिप्तवती च । सद्यः पश्चिम-आस्ट्रेलियाजेराल्ड्प्रदेशे स्थितः अण्डूपिटस्नामकः युवकः तां कूपीं स्वीकृत्य चिटिकां पठित्वा उत्तरं प्रेषितवान् - ''एतया कूप्या १६,००० कि.मी. दूरं प्रयाणं कृतम् । एषः अपूर्वः विक्रमः अस्ति'' इति । एतादृशं विक्रमं गिन्निस्पुस्तके न पञ्जीक्रियते इति तु दुरदृष्टकरम् एव ।

## प्रत्यागतः उष्ट्रः

१९९१ तमे वर्षे गल्फ्युद्धस्य कारणतः प्रवृत्ते कोलाहले कुवैट्प्रान्ते स्थिताः उष्ट्राः इतस्ततः विकीर्णाः जाताः । तेषु केनचित् उष्ट्रेण सर्वत्र अटित्वा पञ्चवर्षाणाम् अनन्तरं स्वस्वामिनः गृहम् अन्विष्य प्रत्यागतम् अस्ति । स्वस्थम् उष्ट्रं दृष्ट्वा तस्य स्वामी महमद् अल् अव्वायिषीर् उष्ट्रस्य विश्वासस्वभावं श्लाघमानः एकं पद्यं लिखितवान् ।



# गन्धर्वगानम्

आरब्धं कार्यं परित्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''हे राजन् ! एतादृशे अन्धकारे भवता किं साधनीयम् इति कठोरदीक्षा स्वीकृता इत्यंशः मया तु न ज्ञायते । राज्यपालकः भवान् स्वस्मात् अधिकं शक्तिशालिनम् अपरं महाराजं सम्मुखीकर्तुम् इच्छन् अगोचर-शक्तिसम्पादनार्थं प्रयत्नं करोति, उत अन्यान् महाराजान् सर्वान् जित्वा चक्रवर्ती भवितुम् इच्छति ? यः लौकिकसुखं, ख्यातिं च इच्छति तेन वास्तविकजीवनम् अपि चिन्तनीयम् अस्ति । हितं किम्, अहितं किम् इति ज्ञातुं तस्य विवेचनाशक्तिः आवश्यकी । अन्यथा यः अध्यात्मचिन्तने,

## वेतालकथा



तात्त्विकविषये च आसक्तः भवति सः आत्मना कष्टेन सम्पादितम् अपि अन्येभ्यः दत्तवान् भवति कदाचित् । अत्र उदाहरणरूपेण देवशर्मनामकस्य युवकस्य कथां श्रावयामि । मार्गायासपरिहारार्थं तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

देवशर्मा नाम युवकः विशालदेशे कस्मिंश्चित् कुग्रामे आसीत् । तस्य सङ्गीतविदुषां परिवारः आसीत् । तस्य पितामहः वीणावादने, पिता गीतगाने च प्रसिद्धौ आस्ताम् । अतः बाल्यतः एव देवशर्मणः सङ्गीते आसक्तिः वर्धिता । तस्य बाल्ये एव मातापितरौ दिवङ्गतौ । अतः देवशर्मा स्वगृहे स्थितानां ताडपत्राणाम् अध्ययनं, सङ्गीताभ्यासं च कुर्वन् अपारं सङ्गीतज्ञानं सम्पादितवान् ।

एवं सति अनिरीक्षिततया विशालदेशस्य आस्थानसङ्गीतविद्वान् दिवङ्गतः । सङ्गीत-स्पर्धाम् आयोज्य, तत्र एतावत्पर्यन्तम् अपि येन केनापि अश्रुतं रागं यः गायति सः आस्थानपण्डितस्थाने योजनीयः इति महाराजः निर्णीतवान् । अतः 'राजधान्याम् आयोजितायां सङ्गीतस्पर्धायां सर्वे भागं वहेयुः' इति राजा देशे सर्वत्र उद्घोषणं कारितवान् ।

उद्घोषणस्य वार्तां ज्ञात्वा देवशर्मा चिन्तितवान् यत् जनानां पुरतः मम प्रतिभां प्रदर्शयितुम् एषः योग्यः अवकाशः प्राप्तः इति । अतः सः राजधानीं प्रति प्रस्थितवान् । अनन्तरदिने मध्याह्नसमये कञ्चित् अग्रहारं प्राप्तवान् च । तत्र सः कश्यपनामकस्य कस्यचित् वृद्धस्य गृहे आश्रयं प्राप्तवान् । तस्य वृद्धस्य पौत्री काचित् आसीत् । सः वृद्धः अपि सङ्गीतविद्वान् एव । सङ्गीतस्पर्धार्थं देवशर्मा राजधानीं प्रति प्रस्थितः इत्यंशं ज्ञात्वा 'गायतु' इति तम् उक्तवान् कश्यपः । तदनुगुणं गीतवान् देवशर्मा । देवशर्मणः गीतं श्रुत्वा नितरां सन्तुष्टः कश्यपः तम् आलिङ्गितवान् ।

''अहं भवतः पितामहस्य विषयं श्रुतवान् अस्मि । सङ्गीतक्षेत्रे तत्सदृशः विद्वान् अपरः कोऽपि नास्ति'' इति उक्त्वा क्षणं यावत् विचिन्त्य - ''अहम् अपि कञ्चित् अपूर्वं रागं जानामि'' इति उक्तवान् कश्यपः । अनन्तरं तस्य रागस्य कथाम् आरब्धवान् च -

"अहं गुरुकुले पठामि स्म । एकदा समिधः निमित्तम् अहम् अरण्ये अटन् आसम् । तदा अहं कस्यचित् मधुरं स्वरं श्रुतवान् । आरम्भे कस्यचित् पक्षिणः स्वरः इति अहं चिन्तितवान् । अनन्तरम् अभासत यत् सहस्त्रभ्रमराणां झेङ्कारस्वरः एषः इति । अहं कुतूहलेन तं स्वरम् अनुसृत्य गच्छन् कस्यचित् मुनेः आश्रमं प्राप्तवान् । तत्र मुनेः पुत्री पुष्पमालां रचयन्ती तन्मयतया गायन्ती आसीत् । मम आगमनं दृष्ट्वा सा गानं स्थगितवती ।

मम जीवने कदापि तादृशं अपूर्वं सङ्गीतं मया न श्रुतम् आसीत् । अतः अहं मुनिं नमस्कृत्य 'तं रागं मां पाठयतु' इति प्रार्थितवान् ।

तदा मुनिः मां गानविषयम् उक्तवान् - "वत्स ! एषः लोकातीतः अपूर्वः रागः अस्ति । सामान्यतः पञ्चषेभ्यः शतकेभ्यः पूर्वम् अस्माकं पूर्वजः कश्चित् गन्धावृतपर्वतस्य उपरि तपः कर्तुं गतवान् आसीत् । एकदा तपः कुर्वता तेन अश्रुतपूर्वस्य रागस्य गीतं श्रुतम् । प्रजापालनामकः कश्चित् गन्धर्वः तत् गीतम् गायन् आकाशात् तत्रैव स्थितस्य सरोवरस्य समीपम् अवतीर्णवान् ।

अस्माकं पूर्वजः तत् श्रुत्वा तन्मयः सन् गन्धर्वम् उक्तवान् - "महानुभाव ! इदानीं येन रागेण भवता गीतं सः रागः अपूर्वः अस्ति । एकवारम् एव श्रुत्वा अहं तं रागं कण्ठस्थीकृतवान् । कृतज्ञः अहम्" इति ।

एतस्मात् कुपितः गन्धर्वः - "भवान् यत् उक्तवान् तत् सत्यम् अस्ति । परन्तु एतं




रागम् अन्यं यदि भवान् पाठयिष्यति तर्हि तत्क्षणे एव भवता सः रागः विस्मृतः भविष्यति" इति शापं दत्त्वा ततः अदृश्यतां गतः ।

एवंप्रकारेण तं गन्धर्वरागं मम वंशे पारम्परिकक्रमेण कश्चित् जानाति एव ।"

एवं कथाम् उक्त्वा कश्यपः - "वत्स ! अहं यं रागं जानामि तं ज्ञातुम् अन्यस्य कस्यापि अवकाशः एव नास्ति । एतं रागं यः गायति तं महाराजः निश्चयेन आस्थानसङ्गीतपण्डितस्थाने नियोजयिष्यति" इति वदन् गन्धर्वरागस्य किञ्चित् आलापनं कृत्वा स्थगितवान् । तस्य रागालापनसमये देवशर्मा तन्मयः आसीत् । तादृशं मधुरं सङ्गीतं देवशर्मा इतः पूर्वं कदापि न श्रुतवान् आसीत् । सः कश्यपं




नमस्कुर्वन् – ''स्वामिन् ! भवान् मध्ये एव किमर्थं गानं स्थगितवान् ? एतस्य रागस्य लक्षणं किम् ? स्वरयोजनं कथम् ? सम्पूर्णम् आलापनं करोतु तावत्'' इति प्रार्थितवान् ।

''वत्स ! त्वरां मा करोतु । यदि तं रागं भवन्तं बोधयिष्यामि तर्हि अनुक्षणम् एव अहं तं रागं विस्मरिष्यामि । सङ्गीतम् एव मम सम्पत्तिः अस्ति । मम पौत्र्याः विवाहदायित्वं मम अस्ति'' इति वदन् कश्यपः दूरे स्थितां पौत्रीं दर्शितवान् । तदा लज्जिता पौत्री गृहस्य अन्तः गतवती ।

देवशर्मा क्षणं यावत् विचिन्त्य – ''स्वामिन् ! राजधानीगमनार्थं त्रीणि दिनानि अवशिष्टानि सन्ति । अहं कञ्चित् विषयं विस्मृतवान् । अतः मम ग्रामं गत्वा आगमिष्यामि'' इति वदन् ग्रामं प्रति प्रस्थितवान् । कश्यपस्य रागालापनम् एव देवशर्मणः कर्णयोः गुञ्जति स्म । तस्य रागस्य लक्षणं कुत्रापि लभ्यते वा इति सः गृहे सर्वत्र अन्विष्टवान् । पुरातनताडपत्राणि सर्वाणि दृष्टवान् । परन्तु तस्य प्रयत्नः व्यर्थः जातः । कश्यपः एकः एव तम् अपूर्वं रागं जानाति स्म । देवशर्मा पुनः कश्यपस्य समीपम् आगतवान् । कश्यपः देवशर्माणं पुरतः उपवेश्य यदा पौत्री वाद्यं वादयन्ती आसीत् तदा गन्धर्वरागेण गीतवान् । तस्य रागस्य लक्षणं बोधितवान् च । देवशर्मा पुनः प्रयत्नं कृत्वा तेन रागेण गीतवान् । तत् श्रुत्वा कश्यपः, तस्य पौत्री च स्तम्भीभूतौ । देवशर्मणः अपि पुनर्जन्म प्राप्तम् इव अभवत् । तस्य मुखम् अपि प्रकाशमानं दृश्यते स्म ।

देवशर्मणः आनन्दम्, उद्वेगं च दृष्ट्वा कश्यपस्य पौत्री उक्तवती – ''मम पितामहः मम निमित्तम् एव सङ्गीतसम्पत्तिं रक्षितवान् इव, 'मम पुत्रीं यः वृणोति तमेव अपूर्वं रागं बोधयिष्यामि' इति सूचयन् इव च भवता सह सम्भाषणं कृतवान् अस्ति । भवान् यदा ग्रामं प्रति गतवान् आसीत् तदा 'मम विवाहविषयं मा गोपयतु' इति पितामहम् अहम् उक्तवती । तत् वचनं पितामहः अङ्गीकृतवान् अस्ति । अतः भवान् मां परिणयेत् एव इति नियमः नास्ति'' इति ।

''भवत्याः परिणये मम कापि आपत्तिः नास्ति । भवत्याः तादृशी आपत्तिः अस्ति चेत् सूचयतु । यतः अहं तु सङ्गीतस्पर्धार्थं

राजधानीं न गमिष्यामि इति निश्चितवान्'' इति हसन् उक्तवान् देवशर्मा ।

वेतालः एवं कथां समाप्य अवदत् - ''हे राजन् ! लौकिकसुखार्थं, कीर्तेः प्राप्त्यर्थं च देवशर्मा सङ्गीतस्पर्धायां भागं गृहीत्वा आस्थानविद्वान् भवितुम् इष्टवान् खलु ? अतः एव सः कश्यपस्य द्वारा अपूर्वं गन्धर्वरागं ज्ञातवान् । पितामहः रागं बोधितवान् इति कारणतः कश्यपस्य पौत्री अपि स्वविवाहविषये देवशर्मणः निर्बन्धं न कृतवती । तथापि देवशर्मा राजधानीगमन-विचारं किमर्थं परित्यक्तवान् ? गृहस्थ-जीवनस्य साधकबाधकं विस्मृत्य मानसिक-दौर्बल्यकारणतः विशिष्टं रागं ज्ञात्वा अपि स्पर्धार्थं गमनस्य विचारं देवशर्मा परित्यक्तवान् यत् तत् तस्य अज्ञानम् एव खलु द्योतयति ? मम एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः- ''यः उत्तमः कलावित् सः लौकिकसुखार्थं, धनसम्पत्तेः निमित्तं वा स्पर्धायां भागं न वहति । देवशर्मणः सङ्गीतविदुषां वंशः । तस्य पितामहः प्रपितामहः चापि राजाश्रयं न इष्टवन्तौ आस्ताम् । तादृशकुटुम्बे देवशर्मा जन्म प्राप्य सङ्गीतस्पर्धायां भागं गृहीत्वा आस्थानविद्वान् भवितुं यत् इष्टवान् तत् तस्य बलहीनतां दर्शयति इति तु सत्यम् एव । परन्तु कश्यपस्य द्वारा गन्धर्वरागं श्रुत्वा अपूर्वानन्दं यदा सः अनुभूतवान् तदा सः चिन्तितवान् यत् अपूर्वरागेण स्पर्धायां गीत्वा अन्येषां कृते तस्य दानम् अपराधः इति । कलोपासकः आत्मानन्दम् एव सर्वश्रेष्ठं भावयति । यदा आत्मानन्दः प्राप्यते तदा सः अन्यविधलाभान् सर्वान् तृणाय मन्यते । देवशर्मा तु श्रेष्ठः कलावित् । अतः एव सः आत्मानन्दस्य प्राप्तेः अनन्तरम् अन्यप्रयोजनानां प्राप्तौ अनिच्छां प्रकटितवान् यत् तद् सर्वथा उचितम् अस्ति । देवशर्मणः मानसिकदौर्बल्यम् इति चिन्तनं तु अनुचितम् एव'' इति उक्तवान् ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा पुनः वृक्षस्य शाखाम् अवलम्बितवान् ।





# उपहासप्रवृत्तिः

कलापुरे सीतारामनामकः कश्चित् आसीत् । कदाचित् विकारनामकः सीतारामस्य कश्चित् बन्धुः तस्य गृहम् आगतवान् । विकारः सर्वदा बालान् रोदयन् आनन्दम् अनुभवति स्म ।

सीतारामस्य दशवर्षीयः पौत्रः शेखरः । चित्रलेखने तस्य महती आसक्तिः आसीत् । एकदा शेखरः एकस्य अश्वस्य चित्रं लिखित्वा विकाराय प्रदर्शितवान् ।

तदा विकारः चित्रं दृष्ट्वा - ''किं भोः ! भवान् गर्दभस्य चित्रं लिखितवान् !'' इति उक्तवान्, उच्चैः हसितवान् च ।

तदा तत्र स्थिताः प्रतिवेशिनः बालाः अपि उच्चैः हसितवन्तः । एतस्मात् शेखरस्य अवमानः अभवत् ।

विकारः पुनरपि शेखरम् उपहसन् उक्तवान् - ''अश्वं लेखितुम् उद्युक्तः भवान् गर्दभं लिखितवान् । एवं तर्हि गर्दभः एव लेखनीयः चेत् किं करणीयम् ? अश्वस्य चित्रस्य लेखनार्थं प्रयत्नः करणीयः भवता । ज्ञातं ननु ?'' इति ।

एतस्मात् बालाः पुनः अपि हसितवन्तः । तदा विकारः इतोऽपि अधिकम् उत्साहं प्राप्य - ''इतः परं भवान् यस्य कस्यापि चित्रस्य लेखनात् पूर्वं मह्यं दर्शयतु । अहं चित्रलेखनार्थं भवतः मार्गदर्शनं करिष्यामि'' इति उक्तवान् ।

एतादृशवचनानि श्रुत्वा शेखरः अवमानेन चित्रं स्वीकृत्य प्रसिद्धचित्रकारस्य चन्द्रकान्तस्य गृहं गतवान् । चित्रलेखनार्थं सः शेखराय प्रोत्साहं ददाति स्म ।

शेखरेण उक्तं सर्वं श्रुत्वा चन्द्रकान्तः तेन लिखितं चित्रम् अपि दृष्ट्वा - ''भवान् पूर्वं यादृशं लिखति स्म ततोऽपि उत्तमं चित्रं लिखितवान् अस्ति एतत्सन्दर्भे । परन्तु भवान् त्वरया सर्वं कार्यं करोति । सर्वाः

अपि विद्याः श्रद्धया पठनीयाः । भवान् यदि श्रद्धया पठितुम् इच्छति तर्हि अहं भवन्तं चित्रकलां बोधयिष्यामि'' इति ।

शेखरः ततः आरभ्य श्रद्धया, एकाग्रतया च चन्द्रकान्तात् चित्रकलाम् अभ्यस्तवान् । दिने दिने सः चित्रलेखने प्रगतिं प्राप्तवान् । परन्तु विकारः तस्य चित्रेषु सर्वदा दोषान् एव पश्यति स्म ।

''मया लिखितं चित्रं विकारः न इच्छति । अतः खेदः मम'' इति निरुत्साहेन कदाचित् चन्द्रकान्तम् उक्तवान् शेखरः ।

चन्द्रकान्तः क्षणं विचिन्त्य एकं चित्रं लिखित्वा शेखराय दत्त्वा उक्तवान् - ''मया एव एतत् लिखितम् इति उक्त्वा भवान् एतत् चित्रं विकाराय दर्शयतु । तत्र यत् प्रवर्तिष्यते तत् मां वदतु च'' इति ।



शेखरः तत् चित्रं दृष्टवान् । तत् गदाधारिणः भीमसेनस्य चित्रम् आसीत् । चित्रं तु अत्यन्तं सुन्दरम् आसीत् । तत् चित्रं यदा विकाराय सः दर्शितवान् तदा विकारः - ''आञ्जनेयस्य चित्रलेखने प्रवृत्तः भवान् जाम्बवतः चित्रं लिखितवान् अस्ति'' इति वदन् उपहासं कृतवान् ।

''एतत् भीमस्य चित्रम् अस्ति'' इति शेखरः मन्दस्वरेण उक्तवान् ।

तदा विकारः उच्चैः हसन् - ''भवान् एकस्य युगस्य चित्रं लेखितुम् इच्छति । किन्तु अन्यस्य युगस्य एव चित्रं लिखितं भवति'' इति उक्तवान् ।

एतस्मात् खिन्नः शेखरः चन्द्रकान्तस्य समीपं गत्वा प्रवृत्तं सर्वं निवेद्य - ''भवान् अपि चित्रं लेखितुं न जानाति । अतः एव अहमपि चित्रकलायां निपुणः न अभवम्'' इति उक्तवान् ।

तदा चन्द्रकान्तः हसन् - ''वत्स ! अलम् अन्यथा चिन्तनेन । वस्तुतः तु विकारस्य स्वभावः एव विकृतः इति भाति । तस्य अन्यव्यवहाराः कथं भवन्ति ?'' इति पृष्टवान् ।

''सः मासद्वयतः अस्माकं गृहे एव अस्ति । सर्वेषां द्वारा स्वकार्यं कारयति । 'इतोऽपि एषः न प्रतिगतवान् खलु ?' इति गृहे सर्वे खेदम् अनुभवन्तः सन्ति'' इति उक्तवान् शेखरः ।

''एवं तर्हि इदानीं किं करणीयम् इति मया ज्ञातम् । अहम् एकं चित्रं लिखित्वा दास्यामि । यदा विकारेण सह गृहसदस्याः सर्वे भवन्ति तदा तम् एकं विहाय अन्येभ्यः

सर्वेभ्यः चित्रं प्रदर्शयतु । तदा स्वयम् एव अपमाननम् अनुभविष्यति विकारः'' इति उक्त्वा तत्क्षणे एव एकं चित्रं लिखित्वा शेखराय दत्तवान् चन्द्रकान्तः ।

शेखरः चित्रं स्वीकृत्य गृहं गत्वा यथा चन्द्रकान्तेन उक्तं तथा एव कृतवान् । तत् चित्रं दृष्टवान् शेखरस्य पितामहः उक्तवान् - 'एषः वराहः' इति । पितामह्या उक्तम् - 'एषः वृषभः' इति । पिता 'गर्दभः' इति, माता 'शुनकः' इति, अन्यः कश्चित् 'शृगालः' इति उक्तवन्तः ।

एतत् सर्वं दृष्ट्वा विकारः उत्साहेन - ''मह्यम् अपि दर्शयतु'' इति वदन् चित्रं स्वीकृतवान् ।

चित्रं दृष्टवतः विकारस्य मुखे महत् परिवर्तनं जातम् । यतः तत् चित्रं विकारस्य एव आसीत् । तत्र लोपः किञ्चित् अपि न आसीत् । 'सीतारामपरिवारजनाः मम विषये कियतीं जुगुप्सां प्राप्तवन्तः सन्ति' इति विकारः अवगतवान् । तं भावं प्रदर्शयितुं विकारेण एव अवकाशः कल्पितः आसीत् । यदा शेखरः चित्रं लिखित्वा प्रदर्शयति स्म तदा विकारः उपहसति स्म । इदानीं विकारस्य चित्रं दृष्टवन्तः गृहसदस्याः अपि तथा एव कृतवन्तः आसन् ।

स्वदोषं ज्ञात्वा विकारः लज्जाम् अनुभवन् तस्मिन् एव दिने स्वग्रामं प्रतिगतवान् । एतस्मात् सन्तोषं प्राप्य शेखरस्य पितामहः उक्तवान् - ''शेखर ! विकारस्य उपहासप्रवृत्तितः भवतः खेदः जातः स्यात् । किन्तु तेन यथा व्यवहृतं तथा व्यवहारतः अस्माकं तु लाभः एव जातः'' इति ।

अत्रान्तरे तत्र आगतः चन्द्रकान्तः प्रवृत्तं सर्वं ज्ञात्वा - ''विकारस्य व्यवहारात् एषः शेखरः नितरां खिन्नः आसीत् । इदानीं सर्वं सुखान्तं जातम् । वस्तुतः शेखरः प्रतिभाशाली एव । योग्यः प्रोत्साहः दत्तः चेत् एषः श्रेष्ठः कलाकारः भविष्यति इत्यत्र नास्त्येव सन्देहः । एतादृशानां प्रयत्नं दृष्ट्वा कदापि उपहासः न करणीयः, प्रत्युत मधुरवचनैः प्रोत्साहनं करणीयम् । तदा एव प्रतिभा विकसिता भविष्यति'' इति उक्तवान् ।

तत्रत्याः सर्वे मौनसम्मत्या एतं विषयम् अङ्गीकृतवन्तः । तृप्तस्य शेखरस्य मुखे मन्दहासः उत्पन्नः ।



## समुद्रतीरप्रयाणम् - १०

# केरलभूमौ ....

**रचना - मीरा नायर् ◆ चित्रम् - गोपकुमारः**




भारतस्य पश्चिमतीरे दक्षिणाभिमुखं यदि वयं गच्छामः तर्हि कर्णाटकभूमेः अनन्तरं ५५० कि.मी. दैर्घ्योपेतं नातिविस्तृतं केरलराज्यं प्राप्नुमः । नारिकेलवृक्षबाहुल्यात् एषा भूमिः 'केरलम्' इति नाम प्राप्नोत् इति श्रूयते । पूर्वम् एषा भूमिः 'चेरलम्' इति निर्दिश्यते स्म, यस्य च अर्थः भवति - 'समुद्रात् पृथग्भूता भूमिः' इति । परशुरामः परशोः क्षेपणात् एतां भूमिं सृष्टवान् इति पुराणकथा श्रूयते । किन्तु भूगर्भशास्त्रज्ञाः अभिप्रयन्ति यत् अनन्तवर्षाणाम् अनन्तरं भूगर्भस्फोटः जातः यत् तस्य परिणामतः एषा भूमिः सृष्टा इति ।

मलबारप्रदेशे प्रवर्ध्यमानानां मरीचादीनां निमित्तं क्रिस्तात् पूर्वम् एव ईजिप्ट्, अरेबिया, ग्रीस्, असीरिया,रोम् इत्यादिभ्यः प्रदेशेभ्यः वणिजः आगच्छन्ति स्म । उत्तरमलबार्तीरे कण्णूरु, तलस्सेरि, कोझिकोड्, पन्थलयानि, बेय्पूर, क्लिण्डि, इत्येतानि नौकास्थानानि प्रसिद्धानि सन्ति ।

दक्षिणकेरलदिग्भागे कण्णूरु-जनपदे २१६ मीटरात्मकः एझिमलपर्वतः अस्ति,

एझिमलसमीपस्थं शिलामयं तीरम्

यस्य च २५० मीटरात्मकः भागः समुद्रे निमग्नः अस्ति । अत्र एकं नौकानिर्माणकेन्द्रं निर्मीयमाणम् अस्ति ।

भारतीयस्य क्रीडाचक्रस्य (सर्कस्) उत्पत्तिः केरलभूमौ एव जाता । अस्मद्देशीयाः सर्वाः अपि सर्कस्संस्थाः प्रायः कण्णूरु-तलस्सेरि-प्रभृति-प्रदेशीयैः मलयाळजनैः एव सञ्चाल्यन्ते । कळरिप्पायल्-नामके युद्धतन्त्रे निपुणः कुन्विरामन्नामकः जनः एव १९०१तमे वर्षे तलस्सेरिनगरे सर्कस्संस्थाम् ऐदम्प्राथम्येन आरब्धवान् आसीत् ।



तलस्सेरितः दक्षिणभागे माहेनामकं सुन्दरं नगरम् अस्ति, यच्च केन्द्रशासितस्य पाण्डिच्चेरीराज्यस्य अङ्गम् अस्ति । पूर्वम् एतत् नगरं 'मय्यालि' इति निर्दिश्यते स्म । गच्छता कालेन माहे डिले ओर्डोनायिस्नामकस्य संस्मरणार्थम् एतत् 'माहे'नाम्ना निर्दिष्टम् अभवत् । फ्रेञ्च्जनाः भारतं परित्यज्य गमनसमये तत्प्रदेशवासिभ्यः भारतीयमूलेभ्यः फ्रेञ्च्पौरत्वम् अपि दत्तवन्तः आसन् । अतः फ्रेञ्च्पौराः बहवः सन्ति पाण्डिच्चेरीराज्ये । एतत्प्रदेशीयानां प्रतिनिधित्वेन फ्रेञ्च्शासनसभायां कश्चन शासकः अस्ति अपि !

माहेतः दक्षिणदिशि स्थितः पडक्केकारनामकं नगरम् (एतस्य 'बडगार' इत्यपि नामान्तरम् अस्ति) अस्ति, यच्च वाणिज्य-केन्द्रत्वेन नौकास्थानत्वेन चापि प्रसिद्धम् अस्ति । मरीचः, नारिकेलानि, एतत्सम्बन्धिवस्तूनि च अत्र प्राधान्येन विक्रीयन्ते । बडगारनगरम् उत्तरमलबारप्रदेशे सुविख्यातस्य तच्चोळि ओत्तेणन्वर्यस्य जन्मभूमिः अपि । ३२तमे वयसि एव दिवं गतस्य एतस्य वीरस्य साहसगाथाः वर्णिताः सन्ति उत्तरमलबारप्रदेशे प्रसिद्धासु वडक्कन्-

*कळारिप्पायत्नामकं केरलीयं युद्धविद्याकौशलम्*

**कोझिक्कोड्, यत्र कुक्कुटरवसम्बन्धः अस्ति ।**



पाट्टक्कळ्नामकेषु जानपद-गीतेषु । बडगारसमीपस्थे कस्मिंश्चित् आलये प्रति-वर्षम् ओत्तेणन्-स्मारकाः उत्सवाः प्रचलन्ति ।

बडगारतः अग्रे गतं चेत् 'पन्थलयानि' लभ्यते । चारित्रिक-दृष्ट्या एतस्य नगरस्य विशेषमहत्त्वम् अस्ति । सप्तमशतकीयम् एकं यवनमन्दिरम् अत्र अस्ति, यच्च मेक्कास्थयवनमन्दिरस्य सादृश्यं विशेषतः भजते ।

प्राचीने काले अरेबियातः एतेन मार्गेण नौकया गच्छन्तः नाविकाः प्रयाणिकाः च अत्र क्षणकालं प्रयाणं स्थगयित्वा मन्दिरं नमस्कृत्य प्रयाणम् अनुवर्तयन्ति स्म । इतः अनतिदूरे समुद्रतीरे एकं पादचिह्नं दृश्यते । लङ्कागमनमार्गे आदम्वर्येण भरतभूमौ स्थापितस्य पदस्य चिह्नम् एतत् इति अत्रत्याः जनाः मन्यन्ते ।

इतोऽपि दक्षिणभागे कोझिकोड् अस्ति, यच्च पूर्वं कालिकत्नाम्ना निर्दिश्यते स्म । सप्तमे शतके मलबारराजः चेरमन्पेरुमाळवर्यः मेक्कां प्रति गमनात् पूर्वं स्वस्य राज्यं विविधसामन्त-राजेभ्यः दत्तवान् आसीत् । एवं भूमिं प्राप्तवत्सु जामोरिन् अपि अन्यतमः । कालिकादेवालयस्य उपरि स्थितस्य कुक्कुटस्य रवः यावद्दूरे श्रूयते तावती भूमिः जामोरिन्वर्याय दत्ता राज्ञा । अतः एव एतस्य प्रदेशस्य नाम 'कोझिक्कोड्' इति जातम् ।

*झमोरिन्वर्येण सह वार्तालापं कुर्वन् वास्कोडगामा*

'जामोरिन्' इत्येतत् वंशनाम । समुद्रराजः 'सामुद्रीय'पदेन निर्दिश्यते स्म । तस्यैव पदस्य अपभ्रंशः 'जामोरिन्' इत्येतत् पदम् । कुञ्ञालिमारक्कार्स्नामकानां सेनानायकानां साहाय्येन जामोरिन्जनाः कोझिक्कोड्राज्यं प्रबलसंस्थानरूपेण संवर्धितवन्तः आसन् ।

१५ शतकस्य आदिभागे चीनादेशीयाः कोझिक्कोड् आगत्य वाणिज्यं कृतवन्तः आसन् । ते सुवर्ण-रजत-ताम्र-कौशेयवस्त्रादीनि अत्र विक्रीय एला-मरीच-कार्पासवस्त्रादीनि नयन्ति स्म ।

१४९४तमे वर्षे वास्कोडगामः कोझिक्कोडसमीपस्थे भारतभूभागे पदं स्थापितवान् । एषा काचित् महत्त्वपूर्णा ऐतिहासिकघटना । भारतं प्रति आगन्तुं वास्कोडगामेन यः समुद्रमार्गः अन्विष्टः ततः न केवलं भारतस्य चरित्रे, अपि तु एशियाखण्डस्य बहूनां देशानां चरित्रे महत् परिवर्तनं जातम् । जामोरिन् पोर्चुगीस्जनान् सहर्षम् एव स्वागतीकृतवान् । किन्तु तैः आनीतानि शिरस्त्राणि, तल्पानि, मण्यादीनि वा दृष्ट्वा सः न तथा सन्तुष्टः । पोर्चुगीस्जनाः कालिकट्नगरे वाणिज्यारम्भार्थम् अनुमतिं प्रार्थितवन्तः । एतद्विषये जामोरिन् आदौ असम्मतिं प्रदर्शितवान् चेदपि अनन्तरकाले दुर्गनिर्माणार्थं पोर्चुगीस्जनेभ्यः अनुमतिं दत्तवान् ।

१६१५तमे वर्षे आंग्लेयाः कालिकट्नगरम् आगतवन्तः । ईष्ट्इण्डियाकम्पनी-टिप्पुसुल्तानयोः मध्ये यः सन्धिः जातः तदनुगुणं १७९२तमे वर्षे कालिकट् आंग्लेयानां वशं गतम् ।

कोझिक्कोड् इदानीं वृक्षवाणिज्यस्य केन्द्रम् अस्ति । प्रपञ्चस्तरे एव सुविशालत्वेन ख्यातं वृक्षवाणिज्यकेन्द्रं कोझिक्कोड्समीपे कल्लायूप्रदेशे अस्ति ।

कोझिक्कोड्तः दक्षिणदिशि ९ कि.मी. दूरे बेयपुरनामकं नगरम् अस्ति । टिप्पूसुल्तानः एतत् नगरं 'सुल्तानपट्टनम्' इति निर्दिशन् मलबारप्रदेशस्य राजधानीं कृतवान् आसीत् । इदानीम् अत्र नौकानिर्माणकेन्द्राणि सन्ति । नारिकेलीयवस्तूनां वाणिज्यम् अत्र विशेषतः प्रचलति अपि ।

*काष्ठखण्डान् आकर्षन् गजः । 'ओल्ड् टेष्टमेण्ट्'नामके ग्रन्थे प्रस्तुते सोलमन्निर्मिते आलये केरलीयः वृक्षखण्डः उपयुक्तः इति श्रूयते ।*





# पुरातनः देवालयः

पूर्वं दण्डकारण्ये 'रक्तपिपासु'नामकः राक्षसः आसीत् । यदा बुभुक्षा भवति स्म तदा सः पशून् मारयित्वा खादति स्म । तथापि नरमांसं तस्य प्रियम् आसीत् । अतः तस्मिन् प्रदेशे जनाः एव न सञ्चरन्ति स्म । कदाचित् तत्र मानवाः आगच्छन्ति चेत् भयङ्करम् आक्रोशं कुर्वन् सः तान् गृहीत्वा खादति स्म । अनन्तरम् आदिनं सुखेन निद्रां करोति स्म च ।

तस्मिन् अरण्ये कश्चित् पुरातनः देवालयः आसीत् । तस्मिन् 'सूर्याक्षी' - नामिका देवता आसीत् । तस्याः आश्रयम् सम्प्रार्थ्य ये भक्ताः आगच्छन्ति स्म तेषां भक्तानाम् इच्छां पूरयति स्म सा देवता ।

एकदा तस्मिन् राज्ये महत् भूकम्पनं प्रवृत्तम् । अतः राज्यस्य अधिकांशभागाः नष्टाः अभवन् । केचन जनाः अन्यत् राज्यं गतवन्तः । परन्तु सूर्याक्षीदेवालयस्य कापि हानिः न जाता आसीत् । गच्छता कालेन तस्य राज्यस्य बहुभागाः महारण्यत्वेन परिवृत्ताः अभवन् ।

एतस्मिन् अरण्ये एव रक्तपिपासुः निवसति स्म । एकदा रात्रौ महत्या बुभुक्षया पीडितः सः गुहायाः बहिः आगतवान् । सर्वत्र प्राणिनाम् अन्वेषणं कर्तुम् उद्युक्तः अभवत् च ।

तस्मिन् दिने पूर्णिमा आसीत् । तदा सूर्याक्षी देवालयात् बहिः आगत्य कौमुद्यां सञ्चरन्ती आसीत् ।

दूरतः तां दृष्टवान् राक्षसः उच्चैः आक्रोशं कुर्वन् सूर्याक्ष्याः समीपम् आगतवान् ।

तस्य आगमनात् पूर्वम् एव देवता तम् उग्रदृष्ट्या पश्यन्ती - ''भोः राक्षसाधम ! अहं का इति अज्ञात्वा भवान् मां भक्षयितुम् उद्युक्तः अस्ति खलु । स्मरतु - अहम् अस्मि



सूर्याक्षीदेवता'' इति उक्तवती ।

तदा राक्षसः उच्चैः हसन् - ''भवती या कापि भवतु नाम ! तेन मम किम् ? मम दृष्ट्या तु भवती निरायासं प्राप्तः कश्चन आहारः'' इति उक्तवान् ।

''भवतः अहङ्कारस्य उचितं दण्डनं करोमि'' इति वदन्ती सूर्याक्षी स्वहस्ते विद्यमानं शूलं तस्य मुखं लक्ष्यीकृत्य गृहीतवती ।

अनुक्षणम् एव शूलात् निर्गताः किरणाः राक्षसस्य नेत्रयोः अन्तः प्रविष्टाः । तदा किरणानां तीक्ष्णतां सोढुम् अशक्तः राक्षसः अन्धः जातः ।

एतस्मात् रक्तपिपासुः सूर्याक्ष्याः शक्तिं ज्ञातवान् । सः तां नमस्कृत्य - ''देवि ! कृपया मम अपराधं क्षाम्यतु भवती'' इति प्रार्थितवान् ।

तदा देवता किञ्चित् शान्ता अभवत् । सा उक्तवती - ''भोः राक्षस ! भवतः अहङ्कारार्थं यत्किमपि दण्डनं भवेत् एव । दुष्टशिक्षणं, शिष्टरक्षणं च मम कर्तव्यम् अस्ति । मानवानां वेदना, दुःखं च यदि भवता ज्ञातव्यं तर्हि प्रथमं भवतः दण्डनम् भवेत् एव । दण्डनं नाम हिंसा न । मानवीयता नाम का इति भवता ज्ञातव्यम् अस्ति । अतः भवान् एकेन नेत्रेण द्रष्टुं यथा शक्नुयात् तथा करिष्यामि'' इति ।

रक्तपिपासुः पुनः दृष्टिं प्राप्तवान् । तदा सः सन्तोषेण - ''देवि ! इतः परं भवत्याः दासः अस्मि अहम् । प्रतिदिनं भवत्याः दर्शनार्थं मह्यम् अवकाशं कल्पयतु कृपया'' इति तां प्रार्थितवान् ।

तदा देवता तस्मै पुरातनदेवालयं प्रदर्शयन्ती - ''एतत् एव मम वासस्थलम् । इतः परं भवान् नरमांसभक्षणं त्यजतु । एतस्मात् राक्षसजन्मतः मुक्तिं प्राप्तुं प्रयत्नं करोतु । अत्र आगन्तॄणां पादचारिणाम् इच्छाम् अहम् अवश्यं पूरयिष्यामि'' इति उक्तवती ।

रक्तपिपासुः सूर्याक्षीनाम जपन् गुहां प्रविष्टवान् । पार्श्वे एव वटवृक्षे निलीय उपविष्टः विश्वनाथः एतां सर्वां घटनां दृष्टवान् । सः वैशालीराज्यस्य गुप्तचरः आसीत् । 'सूर्याक्षी शक्तिशालिनी देवता' इति सः ज्ञातवान् ।

अनन्तरं सः वृक्षतः अवतीर्य, पुरातनदेवालयं गत्वा - ''अम्ब ! अहं प्रवृत्तं सर्वं दृष्टवान् । मम पुत्रः मूकः अस्ति ।

एतावत्पर्यन्तं वैद्यैः कृतया चिकित्सया किमपि प्रयोजनं न जातम् । कृपया मम पुत्रं सम्भाषणसमर्थं करोतु'' इति सम्प्रार्थ्य ततः गतवान् ।

पुनः किञ्चित्समयानन्तरं वीरबाहु-नामकः कश्चित् यात्रिकः पार्श्वस्थगुल्मतः बहिः आगतवान् । सः उदयपुरराज्यीयः आसीत् । सः अपि प्रवृत्तं सर्वं दृष्टवान् आसीत् । तथापि सः राक्षसात् भीतिम् अनुभवन् एव सर्वत्र पश्यन् मन्दं देवालयसमीपं गत्वा - ''हे जगदीश्वरि ! बहुभ्यः वर्षेभ्यः मम सन्तानः नास्ति । सन्तानदानेन माम् अनुगृह्णातु कृपया'' इति प्रार्थितवान् ।

केषाञ्चित् दिनानाम् अनन्तरं विश्वनाथः, वीरबाहुः च स्वग्रामं प्राप्तवन्तौ । तत्र विश्वनाथस्य पुत्रः सम्भाषणं कर्तुं समर्थः आसीत् । एतस्मात् सन्तुष्टः विश्वनाथः राजधानीं गत्वा महाराजं चन्द्रकान्तं प्रवृत्तं सर्वं विस्तरेण निवेदितवान् ।

''महाराज ! भवान् तस्य पुरातन-देवालयस्य उद्धारं कारयित्वा तस्याः देवतायाः दर्शनार्थं प्रजानां कृते अवकाशं कल्पयतु । तदा भवतः कीर्तिः अपि सर्वत्र प्रसृता भविष्यति'' इति विश्वनाथः महाराजम् उक्तवान् ।

तस्मिन् समये एव उदयपुरं प्राप्तवान् वीरबाहुः 'स्वपत्नी गर्भवती' इति वार्तां ज्ञात्वा अतीव सन्तुष्टः । सः अपि स्वदेशस्य राजानं सूर्यकेतुं सूचितवान् यत् जीर्णस्य सूर्याक्षीदेवालयस्य उद्धारः कारणीयः इति ।

राजा चन्द्रकान्तः, राजा सूर्यकेतुः च स्वसैन्येन सह सूर्याक्षीदेवालयं प्रति प्रस्थितवन्तौ । यावत् चन्द्रकान्तः देवालयं प्राप्य पूजां कृत्वा देवालयतः बहिः आगतवान् तावता सूर्यकेतुः अपि देवालयं



प्राप्तवान् । उभौ अपि परस्परदर्शनात् एव वस्तुस्थितिम् अवगतवन्तौ ।

क्षणकालस्य अनन्तरं चन्द्रकान्तः - "सूर्यकेतो ! एतत् स्थलं वैशालीराज्यस्य सीमायाम् अस्ति । अतः वयम् एव सूर्याक्षीदेवतायाः निमित्तं नूतनदेवालयस्य निर्माणं करिष्यामः इति सङ्कल्पितवन्तः स्मः" इति सूर्यकेतुम् उक्तवान् ।

तदा सूर्यकेतुः हसन् - "चन्द्रकान्त ! भवान् अन्यथा चिन्तितवान् स्यात् । एतत् अरण्यम् उदयपुरराज्यस्य सीमायाम् अस्ति । अतः वयम् एव अत्र अपूर्वस्य देवालयस्य निर्माणं करिष्यामः" इति चन्द्रकान्तम् उक्तवान् ।

एवम् उभयोर्मध्ये परस्परविवादः उत्पन्नः । किञ्चित्समयानन्तरं उभौ अपि युद्धार्थम् अपि सिद्धौ सन्तौ सैनिकान् सज्जीकृतवन्तौ ।

तस्मिन् समये एव राक्षसः रक्तपिपासुः तेन मार्गेण आगतवान् । सः कोपेन तीक्ष्णदृष्ट्या च तान् सर्वान् पश्यन् - "अयि भोः मूर्खाः ! युद्धे रक्तपातः भवति एव । भवद्भ्याम् उभाभ्याम् अपि स्वस्य मानापमानं चिन्त्यते, न तु प्रजानां योगक्षेमम् । एषा देवी शान्तिम् इच्छति, न तु कलहम् । भवन्तौ उभौ अपि देवालयस्य पुनरुद्धारं कृत्वा देवीदर्शनार्थं प्रजानां कृते अवकाशं कल्पयताम् । तथा यदि न क्रियते तर्हि देव्याः वचनम् अपि उल्लङ्घ्य अहं भवन्तौ खादिष्यामि" इति कठोरस्वरेण उक्तवान् ।

अनुक्षणम् एव सूर्याक्षीदेवी प्रत्यक्षीभूय - "रक्तपिपासो ! भवान् यद्यपि राक्षसः, तथापि महाराजयोः एतयोः अपेक्षया विवेकी अस्ति । अतः भवान् इतः परं यथा नेत्रद्वयेन अपि द्रष्टुं शक्नोति तथा अहं भवन्तम् अनुगृह्णामि" इति उक्त्वा अदृश्या जाता ।

'राक्षसात् अपि भवन्तौ अधमौ' इति देवी भङ्ग्यन्तरेण सूचितवती आसीत् । तस्याः तत् वचनं श्रुत्वा चन्द्रकान्तः सूर्यकेतुः च नितरां लज्जितौ जातौ । ततः तौ परस्परद्वेषं विस्मृत्य स्नेहेन व्यवहरन्तौ देवालयस्य पुनर्निर्माणं कृत्वा देशद्वयस्य अपि प्रजाः देवीदर्शनार्थम् अवकाशं यथा प्राप्नुयुः तथा कृतवन्तौ ।





चन्दमामायाः

# सुवर्णसमयः

## गगने साहसयात्रा

अन्तरिक्षयोधः देवः नव ड्रागोनिवास-स्थानानि नाशयितुम् इच्छन् स्वस्य अन्तरिक्ष-नौकया अङ्गारकग्रहं प्रति गतवान् ।

मध्येमार्गम् -

आष्टिरायिड्स् !
वयम् आहताः स्मः ।

काऽपि हानिः ?

अधोभागीया परिक्रामकचक्र-व्यवस्था उध्वस्तप्राया अस्ति ।

एतस्य ध्वंसात् पूर्वं वयं त्रिवारमात्रं परिक्रामणं कर्तुं शक्नुयाम ।

देवः लक्ष्यानि परिशीलितवान् ....

त्रिभिः परिक्रामणैः नव लक्ष्याणि नाशनीयानि ।
प्रायः असाध्यम् एतत् ।

शक्यते एव ।

कथम् ?

# सुवर्ण-समयस्य प्रश्नावली



**1** अङ्गारकग्रहवासिनां दुराक्रमणकथाम् आश्रित्य १९३८ तमे वर्षे अमेरिका-देशे एकम् आकाशवाणीनाटकं प्रसारितम् । तत् श्रुत्वा जनाः भीताः जाताः । तत् नाटकं कस्य कथापुस्तकस्य आधारेण रचितम आसीत् ? तस्य रचयिता च कः ?



**2** रोमन्देशीया सा चन्द्रदेवता का, या च अर्धचन्द्रं धनूरूपेण, चन्द्रकिरणान् च बाणरूपेण उपयुक्तवती आसीत् ?

**3** खगोलशास्त्रे 'वैट् ड्वार्फ्' पदेन किं निर्दिश्यते ?



**4.** सर्वे ग्रहाः पश्चिमतः पूर्वाभिमुखं परिक्रमणं कुर्वन्ति । किन्तु एकः ग्रहः पूर्वतः पश्चिमाभिमुखं सञ्चरति । एवं तर्हि सः ग्रहः कः ?



उभौ नाक्षत्रमार्गौ कस्यचित् पोर्चुगीस्-नाविकस्य नाम्ना निर्दिश्येते । सः नाविकः कः ? तौ नाक्षत्रमार्गौ च कौ ?



**5**

उल्कापाततः उत्पन्नस्य कस्यचन महागर्तस्य वैशाल्यं १२६५ मीटर्परिमितं, गभीरता १८३ मीटर्-परिमिता च अस्ति । एषः एव उल्कापातगर्तेषु बृहत्तमः । एषः कुत्र अस्ति ?

**6**



१९१० तमे वर्षे कश्चन धूमकेतुः भूमौ दृष्टिगोचरतां गतः सन् निर्गतः । तं दृष्ट्वा प्रपञ्चस्थाः सर्वे आश्चर्यचकिताः, दिग्भ्रान्ताः च । तस्य धूमकेतोः नाम किम् ?

**7**



# निर्मीयतां मौल्डेड्मुखावरणम् !

**अधोनिर्दिष्टेन क्रमेण मुखाकृत्यनुगुणं मौल्डेड्मुखावरणं सुलभतया निर्मातुं शक्यते ।**

१. मुखस्य आकारस्य अनुगुणं निर्यासेन 'मौल्ड्' निर्माय तत् शोषयन्तु ।



२. लघून् पत्रिकाखण्डान् सज्जीकृत्य मुखाकृतेः उपरि लिम्पन्तु । यदा ते शुष्कतां यान्ति तदा पुनरपि लेपनेन कागद-खण्डानाम् अन्यस्तरं निर्मान्तु । एवं चत्वारः स्तराः निर्मातव्याः । ततः सप्ताहं यावत् तत् आतपे स्थापयित्वा शोषयन्तु ।



३. यदा आवरणं शुष्कं भवति तदा मौल्ड्भागम् अपनीय आवरणाकारं यथापेक्षं सज्जीकुर्वन्तु । नेत्रनासिकामुखनिमित्तं रन्ध्राणि कुर्वन्तु । ततः अपेक्षानुगुणं तत् अलङ्कुर्वन्तु । भ्रू-श्मश्रु-केशादिनिमित्तं कौशेय-तन्तवः उपयोक्तुं शक्यन्ते ।







## रच्यतां मार्जारचित्रं – त्रिभिः सुलभैः प्रकारैः





# महाभारतम्

पाण्डवाः द्यूते पराजयं प्राप्य वनवासार्थं हस्तिनापुरतः प्रस्थितवन्तः । तैः सह द्रौपदी अपि प्रस्थितवती । इन्द्रसेनः इत्यादयः चतुर्दश सैनिकाः रथेन पाण्डवान् अनुसृतवन्तः । मध्येमार्गं ते वर्धमान-पुरनामकं ग्रामं प्राप्तवन्तः ।

तस्मिन् ग्रामे हस्तिनापुरतः आगतैः कैश्चित् युवकैः पाण्डवाः मिलिताः । ते युवकाः धर्मराजम् उक्तवन्तः – "हे राजन् ! अस्मान् सर्वान् विहाय भवन्तः मा गच्छन्तु । आत्मना सह अस्मान् अपि नयन्तु" इति ।

तदा धर्मराजः उक्तवान् – "भवन्तः सर्वे मम सहोदराः सन्ति । मम प्रार्थनां भवन्तः शृण्वन्तु । यस्य कस्यापि जन्मनः पापस्य कारणतः वयम् एतादृशीं परिस्थितिं प्राप्तवन्तः । वयं तु सर्वदा सर्वविध-परिस्थितिं सत्येन, निष्ठया च सम्मुखीकुर्मः । भगवतः कृपा अस्मासु यावत् भवति तावत् भयं नास्ति । कालानन्तरं 'सत्यमेव जयते' इति वचनं जगते दर्शयिष्यामः । अस्माकं कष्टं दृष्ट्वा पितामहः भीष्मः, पितृतुल्यः धृतराष्ट्रः, अस्माकं माता कुन्ती च अतीव दुःखिताः सन्ति । भवन्तः सर्वे गत्वा तेषां सान्त्वनं कुर्वन्तु । तेनैव अस्माकं शुभं भविष्यति । भवन्तः बहु दूरतः आगतवन्तः । इतः परं हस्तिनापुरं गच्छन्तु" इति ।

तावता विनयेन धर्मराजः यत् उक्तवान् तत् निराकर्तुम् अशक्ताः ते युवकाः पाण्डवानां श्लाघनं कुर्वन्तः हस्तिनापुरम् आगतवन्तः ।

अनन्तरं पाण्डवाः रथम् आरुह्य गङ्गातीरे अरण्यदिशि प्रस्थितवन्तः । सूर्यास्तसमये ते कस्यचित् वृक्षस्य समीपं गतवन्तः । तस्यां रात्रौ वृक्षस्य अधः एव शयितवन्तः च ।



परितः स्थितेभ्यः ग्रामेभ्यः अनके जनाः तेषां दर्शनार्थम् आगतवन्तः । तेषां द्वारा पाण्डवाः विभिन्नाः कथाः श्रुतवन्तः । प्रातः एव पाण्डवाः गङ्गास्नानं कृत्वा अरण्यमार्गे अग्रे प्रस्थितवन्तः । तदा केचन ब्राह्मणाः धर्मराजम् उक्तवन्तः यत् वयम् अपि भवद्भिः सह अरण्यम् आगच्छामः इति ।

तदा धर्मराजः उक्तवान् - ''अहं मम अनुजाः च असाहायकाः स्मः । यदा अस्माकं समीपे सम्पत्तिः आसीत् तदा अधिकं दानं कृतवन्तः । परन्तु इदानीम् अस्माकं परिस्थितिः शोचनीया अस्ति । मम सहोदराः अपि श्रान्ताः सन्ति । अतः फलम् आनयन्तु इति तान् अपि वक्तुं न शक्नोमि । एवं स्थिते भवतां सत्कारं योगक्षेमव्यवस्थां च कथम् अहं निर्वोढुं शक्नुयाम् ?'' इति ।

''अस्माकं आवश्यकतां वयम् एव पूरयिष्यामः । केनापि कारणेन भवतां कष्टं यथा न भवेत् तथा वयं व्यवहरिष्यामः । वयं तु भवतां सामीप्यं केवलम् इच्छामः'' इति ब्राह्मणाः उक्तवन्तः ।

तदा धर्मराजः स्वपुरोहितं धौम्यं पृष्टवान् - ''मुनिवर्य ! एते ब्राह्मणाः अस्माकं कष्टे सहभागम् इच्छन्ति । एतान् अरण्ये कथं पोषयेम ? भवान् कमपि उपायं सूचयतु'' इति ।

''धर्मराज ! अन्नम् आदित्यमयम् अस्ति। भवान् सूर्यस्य आराधनं कृत्वा तस्य साहाय्येन एतान् ब्राह्मणान् पोषयतु'' इति उक्त्वा धौम्यः धर्मराजं सूर्यस्तोत्रम् उपदिष्टवान् ।

अनन्तरं धर्मराजः निष्ठया सूर्यस्य आराधनं कृतवान्। एतस्मात् सन्तुष्टः सूर्यः प्रत्यक्षः सन् धर्मराजाय एकं पात्रं दत्त्वा - ''धर्मराज ! एतत् अक्षयपात्रम् अस्ति । द्रौपदी कन्दमूलादिभिः पाकं कृत्वा सकृत् अस्मिन् पात्रे स्थापयति चेत् द्वादशवर्षपर्यन्तम् आवश्यकः आहारः भवतां कृते भवताम् अतिथीनां कृते च लभ्यते'' इति उक्त्वा अदृश्यतां गतः ।

धर्मराजः तत् अक्षयपात्रं द्रौपद्यै दत्तवान् । द्रौपदी शाकानां पाकं कृत्वा पात्रे स्थापितवती । तस्मात् सर्वविधः आहारः लभ्यते स्म । अनन्तरं पाण्डवाः गङ्गानदी-तीरतः पश्चिमदिशि स्थितस्य अरण्यस्य द्वारा यमुनां, दृषद्वतीं च तीर्त्वा सरस्वतीनदीतीरे



स्थितं काम्यकवनं प्रविष्टवन्तः ।

काम्यकवनम् अतीव सुन्दरम् । तत्र अनेके मुनयः आसन् । यदा पाण्डवाः काम्यकवने आसन् तदा धृतराष्ट्रः विदुरम् आहूय - "विदुर ! पाण्डवानां वनवास-गमनानन्तरं प्रजाः अस्मत्तः दूरे सन्ति । तेभ्यः कदाचित् अस्माकम् अपायः स्यात् । अतः तेषां मनः जेतुं कोऽपि उपायः अस्ति वा ?" इति पृष्टवान् ।

"महाराज ! अर्थकामादीनां धर्मः एव मूलं भवति । भवान् धर्मेण सर्वान् पालयतु । शकुनेः द्वारा दुर्योधनः वञ्चनात् पाण्डवेभ्यः राज्यं स्वीकृतवान् अस्ति । भवतः पुत्रान् नाशयितुं पाण्डवानां सामर्थ्यम् अस्ति । सभायां दुश्शासनस्य द्वारा द्रौपदीं, भीमं च क्षमां याचयतु । तदा धर्मराजः अपि सर्वान् क्षाम्यति" इति विदुरः धृतराष्ट्रम् उक्तवान् ।

विदुरस्य वचनात् कुपितः धृतराष्ट्रः - "अन्येषां निमित्तं मम प्रियपुत्राय कष्टं न दास्यामि । अहं भवन्तं महता गौरवेण पश्यामि चेदपि भवान् पक्षपातं करोति । भवान् पुत्राणां हितं न इच्छति । भवतः चिन्तनं सर्वं निष्प्रयोजकम् अस्ति । भवतः वचनश्रवणेन मम अपि नाशः भविष्यति । भवान् सर्वदा पाण्डवानां श्लाघनं करोति । अतः भवान् तेषां समीपम्, अन्यत्र कुत्रापि वा गच्छतु" इति विदुरम् उक्तवान् ।

अनुक्षणम् एव विदुरः रथेन पाण्डवानां स्थानं काम्यकवनं प्रति प्रस्थितवान् । विदुरः यदा तत्र प्राप्तवान् तदा धर्मराजं परितः ब्राह्मणानां समूहः एव आसीत् ।

धर्मराजः विदुरं दूरात् एव दृष्ट्वा - "द्यूते अस्माकम् आयुधानां पराजयः न जातः खलु । तानि जेतुम् एव पुनः द्यूतक्रीडार्थं शकुनिना दुर्योधनेन च विदुरः प्रेषितः स्यात् । अन्यथा विदुरः अत्रः किमर्थम् आगच्छति ? 'विदुरस्य आह्वानं वयम् अङ्गीकरिष्यामः' इति दुर्योधनस्य उद्देशः स्यात् । अहं तु इतः परं द्यूतं न क्रीडिष्यामि । यतः अर्जुनस्य गाण्डीवस्य, भवतः गदायाः च नाशः भविष्यति चेत् वयं पुनः राज्यं प्राप्तुं न शक्ष्यामः एव" इति भीमम् उक्तवान् ।

तावता विदुरः समीपम् आगतवान् । धर्मराजः अन्ये सर्वे च उत्थाय तं नमस्कृतवन्तः । आसने तम् उपवेश्य आगमनस्य कारणं पृष्टवन्तः च ।

''धृतराष्ट्रस्य प्रार्थनायाः अनुगुणम् एव अहं स्वाभिप्रायम् उक्तवान् । किन्तु तेन कुपितः धृतराष्ट्रः 'गच्छतु' इति उक्त्वा मां प्रेषितवान्'' इति उक्तवान् विदुरः ।

''तर्हि मम समीपे एव वसन् काले काले यथायोग्यं मार्गदर्शनं करोतु भवान्'' इति धर्मराजः विदुरम् उक्तवान् ।

विदुरः काम्यकवने पाण्डवैः सह वसति इति वार्तां धृतराष्ट्रः ज्ञातवान् । विदुरस्य अभिप्रायदानात् पाण्डवानां महान् लाभः भविष्यति इति जानन् धृतराष्ट्रः अचेतनः जातः । किञ्चित्कालानन्तरं सचेतनः सन् सः सञ्जयं पश्चात्तापेन उक्तवान् - ''सञ्जय ! विदुरः भवतः अनुजः । सः मम स्नेहितः अपि । सः अतीव बुद्धिमान् अस्ति । मम कठोरवचनेन सः काम्यकवनं गत्वा पाण्डवैः सह वसन् अस्ति । तस्य अनुपस्थितौ अहं कार्यं कर्तुम् एव न शक्नोमि । अतः भवान् इदानीम् एव गत्वा विदुरम् आनयतु'' इति उक्तवान् ।

सञ्जयः काम्यकवनं गत्वा - ''विदुरं नेतुम् आगतवान् अस्मि'' इति धर्मराजम् उक्तवान् । अनन्तरं विदुरस्य समीपं गत्वा - ''महानुभाव ! भवतः आगमनानन्तरं धृतराष्ट्रः अतीव दुःखितः अस्ति । भवन्तं नेतुम् अहं तेन प्रेषितः अस्मि । भवन्तं विना धृतराष्ट्रः न जीवेत् । अतः भवान् आगत्य तं रक्षतु'' इति उक्तवान् ।

मृदुहृदयः विदुरः धृतराष्ट्रस्य दुरवस्थां श्रोतुम् अशक्नुवन् धर्मराजस्य अनुमतिं स्वीकृत्य सञ्जयेन सह हस्तिनापुरम् आगतवान् ।



विदुरं दृष्ट्वा नितरां सन्तुष्टः धृतराष्ट्रः तम् आलिङ्ग्य - ''भवान् अत्यन्तं सज्जनः अस्ति । मम वचनानुसारं प्रात्यागतवान् अस्ति भवान् । एतावन्ति दिनानि अहं किङ्कर्तव्यतामूढः आसम् । मां क्षाम्यतु'' इति उक्तवान् ।

तदा विदुरः उक्तवान् - ''भवतः आज्ञानुसारम् अहम् आगतवान् अस्मि । अहं भवन्तं हितवचनानि एव उक्तवान् । मम दृष्ट्या तु पाण्डवाः भवन्तः च समानाः एव । पाण्डवाः तु शोचनीयस्थितौ सन्ति । अतः तेषु मम करुणा अस्ति । एतत् अनुचितं न इत्येव मम अभिप्रायः'' इति ।

विदुरस्य पुनरागमनेन दिग्भ्रान्तः दुर्योधनः कर्णं, शकुनिं, दुश्शासनं च आहूय - ''विदुरः प्रत्यागतवान् अस्ति । सः



पाण्डवपक्षपाती अस्ति । सः मम पितरं कम् अभिप्रायं सूचयति इति अहं न जानामि । यदि पाण्डवाः अपि प्रत्यागमिष्यन्ति तर्हि अहं प्राणत्यागं करिष्यामि'' इति उक्तवान् ।

तदा शकुनिः दुर्योधनम् उक्तवान् - ''मूर्खः इव मा वदतु । भवतः पिता आह्वयति चेदपि पाण्डवाः न आगमिष्यन्ति । कदाचित् आगमिष्यन्ति चेत् पुनः द्यूतक्रीडायां तेषां पराजयं करिष्यामः'' इति ।

शकुनेः एतत् वचनं दुर्योधनाय न अरोचत । एतत् जानन् कर्णः शकुनिं, दुश्शासनं च उक्तवान् - ''वयम् इदानीं सज्जतां कृत्वा अरण्ये स्थितान् पाण्डवान् मारयित्वा आगमिष्यामः । यावत् पाण्डवाः जीवन्ति तावत् ते अस्माकं शत्रवः एव । अतः इदानीम् एव ते जेतव्याः'' इति । एतस्मात् वचनात् सर्वे सन्तुष्टाः अभवन् । ते निर्णीतवन्तः यत् सैन्यं स्वीकृत्य गत्वा पाण्डवैः सह युद्धं करणीयम् इति ।

तस्मिन् समये एव व्यासः धृतराष्ट्रस्य समीपम् आगत्य - ''दुर्योधनादयः द्यूते पाण्डवान् पराजित्य वनवासार्थं यत् प्रेषितवन्तः तत् उचितं न इति मम भाति । अन्यच्च इदानीं पुनः ते युद्धार्थं प्रस्थिताः सन्ति । ते तथा गच्छन्ति चेदपि किमपि प्रयोजनं न भवति । अतः भवान् इदानीम् एव गत्वा तान् निवारयतु । भवान्, द्रोणः, भीष्मः, विदुरः इत्यादयः सन्ति चेदपि ते किमर्थम् एवम् अधर्मम् आचरन्ति ? अधार्मिकव्यवहारः प्रयत्नेन निवारणीयः'' इति उक्तवान् ।

तदा धृतराष्ट्रः - ''महानुभाव ! युद्धवार्ता तु मया न ज्ञाता एव । परन्तु पुत्रव्यामोहकारणतः अहं दुर्योधनम् अवरोद्धुं न शक्नोमि । भवान् एव तं हितवचनं वदतु'' इति उक्तवान् ।

''इदानीं मया गन्तव्यम् अस्ति । अत्र मैत्रेयनामकः मुनिः आगमिष्यति । सः भवतः पुत्रम् उपदेक्ष्यति'' इति उक्त्वा व्यासः ततः गतवान् ।

व्यासेन यथा उक्तं तथा अल्पे एव काले मैत्रेयमुनिः हस्तिनापुरम् आगतः । धृतराष्ट्रः तं नमस्कृत्य - ''महात्मन् ! भवान् कुतः आगतः ?'' इति पृष्टवान् ।

''अहं तीर्थयात्रां कुर्वन् काम्यकवनं गत्वा, पाण्डवैः सह कानिचन दिनानि स्थित्वा भवन्तं द्रष्टुम् आगतवान् ।

पाण्डवाः जटाधारिणः सन्तः वल्कलवस्त्रं धृत्वा कन्दमूलानि खादन्तः कष्टेन अरण्ये जीवनं कुर्वन्तः सन्ति'' इति उक्तवान् मैत्रेयमुनिः ।

अनुक्षणम् एव धृतराष्ट्रः - ''मुनीश्वर ! पाण्डवाः कुशलिनः वा ? ते नियमोल्लङ्घनविषयं न चिन्तयन्ति खलु'' इति पृष्टवान् ।

''यस्यां कस्याञ्चित् अपि परिस्थितौ पाण्डवाः नियमबद्धाः एव भवन्ति । तादृशानां विषये भवतः पुत्रः द्रोहं कृतवान् । द्यूतस्य सर्वं वृत्तान्तम् अहं श्रुतवान् अस्मि'' इति धृतराष्ट्रम् उक्तवान् मैत्रेयमुनिः । पुनः दुर्योधनम् उद्दिश्य - ''भवतः विवेकः अस्ति चेत् पाण्डवानां स्नेहं सम्पादयतु । काम्यकवने भीमः किम्मीरनामकं राक्षसं मारितवान् । सः बकं, जरासन्धं च मारितवान् इत्यंशं भवान् जानाति एव । द्रुपदसदृशाः शूराः पाण्डवैः सह सन्ति । कृष्णः अपि तेषां पक्षे एव अस्ति । तादृशैः सह भवतः विरोधः किमर्थम् ?'' इति पृष्टवान् ।

मैत्रेयस्य वचनं श्रुत्वा दुर्योधनः उपहासपूर्वकं स्वहस्तेन ऊरुं स्पृष्टवान् । हस्तौ उपरि कृत्वा पादस्य अङ्गुष्टेन भूमिं स्पृष्टवान् च ।

तद् दृष्ट्वा मैत्रेयः कोपेन - ''भवतः ऊरुभङ्गं गदया भीमः कुर्यात्'' इति शापं दत्तवान् ।

तदा धृतराष्ट्रः सम्भ्रान्तः सन् - ''मुनीश्वर ! मम पुत्रस्य तादृशी दुर्गतिः यथा न भवेत् तथा अनुगृह्णातु कृपया'' इति प्रार्थितवान् ।

''भवतः पुत्रः पाण्डवैः सह स्नेहेन व्यवहरति चेत् तथा न भविष्यति'' इति उक्तवान् मैत्रेयमुनिः ।

''किम्मीरं भीमः कथं मारितवान् इति किञ्चित् विवरणं करोतु'' इति धृतराष्ट्रः मैत्रेयम् उक्तवान् ।

तदा मैत्रेयः - ''तत् सर्वम् अहं न वदामि । भवान् विदुरं पृच्छति चेत् सः सर्वं विवृणोति । अहं गमिष्यामि'' इति वदन् ततः निर्गतवान् ।

'भीमेन किम्मीरः कथं मारितः स्यात् ?' इति चिन्तयन् दुर्योधनः सभामन्दिरतः बहिः गतवान् ।

– (अनुवर्तते)



# उत्तमः नटः

विजयनगरराज्ये नवरात्रोत्सवः महता वैभवेन प्रचलति स्म । दशदिनात्मके एतस्मिन् उत्सवे बहवः कलाविदः स्वस्य प्रतिभां प्रदर्शयन्ति स्म । अन्तिमे दिने उत्तमाभिनयं कृतवद्भ्यः पारितोषिकं दीयते स्म । अत्युत्तमः नटः महाराजस्य आस्थाने उद्योगे नियुक्तः भवति स्म अपि । महामन्त्री एव निर्णायकसमितेः मुख्यः आसीत् ।

अथ कदाचित् कस्मिंश्चित् नवरात्रोत्सवे त्रयः उत्तमरीत्या अभिनयं कृतवन्तः । ते त्रयः अपि काकतालीयन्यायेन राजकुमारजीवनम् एव अभिनयेन प्रदर्शितवन्तः आसन् । तेषु राज्ञः श्यालस्य पुत्रस्य रविवर्मणः अभिनयः तावत् अत्युत्तमः आसीत् । तस्य अभिनये सहजता स्फुटा आसीत् । द्वितीयः सेनाधिपतिपुत्रः शशिकान्तः अभिनये एकत्र दोषं कृतवान् आसीत् । तृतीयः कृषिकपुत्रः जयदेवः तु द्वित्रेषु स्थलेषु दोषं कृतवान् आसीत् । द्रष्टारः सर्वे चिन्तितवन्तः आसन् यत् रविवर्मा एव प्रथमस्थानं प्राप्स्यति इति । किन्तु न्यायनिर्णयसमित्या उद्घोषितं यत् 'जयदेवः एव श्रेष्ठः नटः' इति ।

एतत् ज्ञात्वा राजा आश्चर्यम् अनुभूतवान् । नवरात्रोत्सवकार्यक्रमस्य अनन्तरं कदाचित् सः मन्त्रिणम् उक्तवान् - ''मन्त्रिवर्य ! उत्तमनटस्य चयनं कस्य अंशस्य आधारेण कृतम् इति मया न ज्ञातम् । अतः भवतः निर्णयः मयि आश्चर्यम् अजनयत्'' इति ।

तदा मन्त्री उक्तवान् - ''रविवर्मा, शशिकान्तः च अभिनये कमपि क्लेशं न अनुभूतवन्तौ । यतः राजजीवनं तयोः सहजम् आसीत् । अतः तौ अभिनयार्थं परिश्रमम् अधिकाभ्यासं वा न कृतवन्तौ एव । जयदेवः तु न तथा । सः परिश्रमेण अभ्यासेन च अभिनयं कृतवान् । यद्यपि तेन अल्पाः दोषाः कृताः, तथापि तस्य परिश्रमं सततताभ्यासं च दृष्ट्वा वयं तस्मै एव प्रथमपारितोषिकं दत्तवन्तः'' इति ।



# ताडवृक्षः

कागदोत्पत्तितः पूर्वं चर्मणि ताडपत्रेषु च लिख्यते स्म जनैः । अस्मद्देशे, नेपाले, टिबेट्देशे च प्राचीनपवित्रग्रन्थाः ताडपत्रेषु एव लिखिताः भवन्ति स्म । नेपालदेशे एषः एव क्रमः इदानीम् अपि अनुवर्तते । अस्माकं देशे प्राचीनाः ताड-ग्रन्थाः केषुचित् ग्रन्थालयेषु सुरक्षितं स्थापिताः सन्ति । मद्रास्विश्वविद्यालयीये ओरियण्टल् म्यानुस्क्रिप्ट्ग्रन्थालये अनेके प्राचीनताडग्रन्थाः सङ्गृहीताः सन्ति । ताडपत्रे कण्टकेन यत् लिख्यते तत् सहस्राधिक-वर्षाणाम् अनन्तरम् अपि अक्षततया स्थास्यति । ताड-पत्रेषु चित्राणि अपि लिख्यन्ते क्वचित् ।

ताडवृक्षः तमिळुभाषया पन्नैः इति, मलयाळ-भाषया पन इति, हिन्दीभाषया ताल् इति, गुजराती-भाषया,मराठीभाषया च ताड् इति, बङ्गालीभाषया तार् इति, कन्नडभाषया ताळे इति च निर्दिश्यते । कलकत्तानगरस्थे सुप्रसिद्धे तारकेश्वरदेवालये स्थितं शिवलिङ्गं ताडवृक्षकाण्डेन एव निर्मितम् अस्ति । अतः एव तस्य तादृशं नाम ।

अस्मद्देशे सैकतभूमौ ताडवृक्षाः सम्यक् वर्धन्ते । उत्तरदिग्भागे आ गङ्गातीरात् दक्षिणभागे आकन्याकुमारीतीरं ताडवृक्षाः बाहुल्येन दृश्यन्ते । ताडवृक्षाणां स्थौल्यं प्रायः ६०-६५ से.मी. परिमितं भवति । औन्नत्यं च ३०-४० मी. परिमितं भवति । ताडपत्राणि गृहाणां छदिनिर्माणे उपयुज्यन्ते । ताड-पत्रैः कटाः वस्त्राणि च निर्मीयन्ते । व्यजनानि छत्राणि चापि निर्मीयन्ते । ताडसूत्राणि उपयुज्य रज्जु-निर्माणम् अपि क्रियते । ताडवृक्ष-रसात् 'नीरा'नामकं पानीयं निर्मीयते । ताडरसनिर्मितः गुडः रुचिकरः शीतलः च भवति ।



अस्मद्देशीयाः ऋषयः

# उपमन्युः

उपमन्युः धौम्यमहर्षेः शिष्यः । तस्य विद्याभ्यासः समाप्तः चेदपि गुरुः तं गुरुकुलात् न प्रेषितवान् । प्रत्युत गोपालनकार्ये तं नियोजितवान् ।

उपमन्युः प्रतिदिनं गुरुकुलीयाः धेनूः अरण्यं नीत्वा चारयित्वा प्रत्यागच्छति स्म । कदाचित् गुरुः उपमन्युं पृष्टवान् - ''आदिनं भवान् अरण्ये एव भवति खलु ? एवं तर्हि बुभुक्षानिवारणं कथं क्रियते ?'' इति ।

''धेनवः यदा तृणानि चरन्त्यः भवन्ति तदा अहं समीपस्थान् ग्रामान् गत्वा भिक्षायाचनेन आहारं सम्पाद्य तेन उदरं पूरयामि'' इति उक्तवान् उपमन्युः ।

''तथा कार्यमध्ये अन्यत्र गमनं न उचितम्'' इति सूचितवान् धौम्यः ।

केषाञ्चित् दिनानाम् अनन्तरं सः पुनः पृष्टवान् - ''वत्स ! इदानीं बुभुक्षानिवारणं कथं क्रियते ?'' इति ।

''धेनूः गुरुकुलं प्रापय्य अनन्तरकाले ग्रामान् गत्वा भिक्षायाचनं करोमि'' इति उक्तवान् उपमन्युः ।

''असमये भिक्षायाचनेन गृहस्थाः न पीडनीयाः । अन्यच्च भिक्षया यत् प्राप्यते तत् आश्रमस्य एव भवति'' इति उक्तवान् धौम्यः ।

पुनः कानिचन दिनानि अतीतानि । एकदा धौम्यः पृष्टवान् - ''इदानीं कथं बुभुक्षा निवार्यते भवता ?'' इति ।

''धेनूनां क्षीरं पीत्वा बुभुक्षा निवार्यते'' इति उक्तवान् उपमन्युः ।

''धेनूनां क्षीरस्य स्वीकरणे मया अनुमतिः न दत्ता खलु ?'' इति उक्तवान् धौम्यः ।

पुनरपि कानिचन दिनानि यदा गतानि तदा धौम्यः पूर्वतनम् एव प्रश्नं पृष्टवान् । तदा उपमन्युः उक्तवान् - ''क्षीरस्य पानस्य अनन्तरं तर्णकानां मुखात् ये क्षीरबिन्दवः पतन्ति तान् पीत्वा बुभुक्षां निवारयामि'' इति ।

''एतत् अपि अयुक्तम्'' इति सूचितवान् धौम्यः । अनन्तरदिने उपमन्युना प्रातः अरण्यं प्रति नीताः गावः सायङ्काले प्रत्यागताः । किन्तु उपमन्युः न प्रत्यागतः । धौम्यः शिष्यस्य अन्वेषणं कुर्वन् कैश्चित् शिष्यैः सह अरण्यं गतवान् ।



कस्मिंश्चित् प्रपाते पतितः उपमन्युः तैः दृष्टः । उपमन्युः वेदनया मन्दं क्रन्दन् आसीत् । धौम्यः तम् उपरि आनीय पृष्टवान् - ''कथम् अत्र पतितवान् भवान् ?'' इति ।

''बुभुक्षाम् असहमानः अहं कस्यचित् वृक्षस्य फलानि खादितवान् । तानि विषमयानि आसन् इति मन्ये । तेषां खादनतः मम दृष्टिः विनष्टा'' इति उक्तवान् उपमन्युः ।

''दृष्टिप्राप्त्यर्थम् अश्विनीदेवते प्रार्थयतु'' इति उक्तवान् धौम्यः । उपमन्युः तथैव कृतवान् । अश्विनीदेवते प्रत्यक्षीभूय तस्मै आहारं दत्तवत्यौ । उपमन्युः तु तत् अस्वीकुर्वन् - ''भिक्षारूपेण यत् प्राप्यते तस्य सेवनार्थं गुरोः अनुज्ञा आवश्यकी'' इति उक्तवान् ।

''भवतः गुरुभक्तिः अनन्या । अतः आवां न केवलं सामान्यदृष्ट्या, अपि तु विशिष्टया अन्तर्दृष्ट्या अपि भवन्तम् अनुगृह्णन्तौ स्वः'' इति उक्त्वा विशेषवरदानेन अनुगृह्य अश्विनीदेवते ततः अदृश्ये जाते ।

प्राचीने काले गुरुः शिष्यहितार्थाय विविधाः परीक्षाः आयोजयति स्म इत्येतस्य उत्तमम् उदाहरणम् अस्ति उपमन्युः ।

# भवन्तः जानन्ति वा ?

१. सर् रोजर् बानिस्टर् किंनिमित्तं प्रसिद्धिं गतः ?
२. अन्तरिक्षे प्रयाणं कुर्वन्तः व्योमगामिनः आकाशं नीलवर्णीयं न पश्यन्ति, प्रत्युत वर्णान्तरयुक्तं पश्यन्ति । स च वर्णः कः ?
३. कः ग्रहः रक्तवर्णीयः इति निर्दिश्यते ?
४. चर्मपाञ्चालिकानाम् उत्पत्तिभूमिः का ?
५. आग्रानगरं कदा केन निर्मितम् ?
६. २५ तमं वर्षं रजतोत्सवनाम्ना आचर्यते । एवं तर्हि कतमं वर्षं 'पेपर् अनिवर्सरी'रूपेण आचर्यते ?
७. जिप्सीजनानां भाषा का ?
८. बाटिक्शैलीयचित्राणि ऐदम्प्राथम्येन कस्मिन् देशे निर्मितानि ?
९. १९२१ तमवर्षात् पूर्वं टेबल्टेन्निस्क्रीडायाः नाम किम् आसीत् ?
१०. रक्तं चतुर्धा विभज्यते । ते रक्तगणाः के ?
११. सुवर्ण-वज्रादीनि मातुं कः परिमाणवाचकशब्दः उपयुज्यते ?
१२. पत्रपेटिकानां वर्णः इदानीं रक्तः भवति । पूर्वं तस्य कः वर्णः भवति स्म ?
१३. सर्वाः सङ्ख्याः रोमन्पद्धत्या लेखितुं शक्याः, ऋते एकस्याः । सा सङ्ख्या का ?
१४. जीब्राप्राणिनां वैशिष्ट्यं किम् ?
१५. अट्लाण्टिक्प्रदेशे एकाकितया विमानं चालितवती वीरमहिला का ?

## उत्तराणि

१. चतुर्षु निमेषेषु मैल्परिमितं दूरम् ऐदम्प्राथम्येन सः धावन् क्रान्तवान् इत्यतः ।
२. पाटलवर्णः ।
३. अङ्गारकग्रहः ।
४. ईजिप्ट्, भारतं च ।
५. सिकन्दर्लोदीवर्येण, १५०६ तमे वर्षे ।
६. प्रथमं वर्षम् ।
७. रोमनी ।
८. इण्डोनेषियादेशे ।
९. पि. पाङ्ग् इति ।
१०. ए,बि,ओ,एबि, चेति ।
११. 'क्यारट्' इति पदम् ।
१२. हरितवर्णः ।
१३. शून्यम् ।
१४. कयोश्चित् अपि उभयोः जीब्राप्राणिनोः शरीरस्थाः पट्टिकाः समानाः न भवन्ति ।
१५. अमीलिया ऐर्वार्ट्, १९२८ तमे वर्षे ।

# सुवर्णसमयप्रश्नावल्याः (३) - उत्तराणि

१. हिंसकः इति ।

२. शशः । आष्ट्रेलियां प्रति अन्यप्रदेशात् आगताः शशाः इदानीं समस्यामूलानि सन्ति । तेषां सङ्ख्या अत्यधिकं प्रवृद्धा अस्ति । धेनूनां मेषाणां च निमित्तं वर्धितानि तृणानि सर्वाणि ते एव खादन्ति ।



३. टिप्पूसुल्तानस्य ।

४. त्रयः । प्रथमं यत् स्वीकृतं तत् श्वेतवर्णीयं चेत् द्वितीयं कृष्णवर्णीयं भवति । यत् तृतीयं स्वीक्रियते तस्य योजनेन एकं युगलं निर्मातुं शक्यम् ।

५. सोमः आदौ गजं नौकायां स्थापयित्वा, जलस्य ऊर्ध्वभागः नौकायाः यं भागं स्पृशति तत्र अङ्कनं कृतवान् । ततः गजम् अवतार्य, गजस्य स्थितितः नौकायाः यावान् भागः मज्जितः भवेत्, तावान् एव भागः यथा मज्जितः भवेत् तथा नौका सिकताभिः पूरिता । ततः सिकतानां भारः ज्ञातः । सः एव गजस्य भारः अपि खलु ?



६. आदौ अयोगोलकानि ३+३+२ इत्येतेन क्रमेण त्रिधा विभक्तव्यानि । ततः त्रितययुतं गणद्वयं तुलायां स्थापनीयम् । यदि उभयोः गणयोः भारः समानः तर्हि द्विगोलकयुते गणे एव न्यूनभारयुक्तम् अस्ति इति निर्णयः । तदा तुलायाः एकस्मिन् पार्श्वे गोलकद्वयम् एव संस्थाप्य गोलकद्वययुक्तगणः अपरपार्श्वे स्थापनीयः । ततः एकैकम् अयोगोलकम् अपनीय न्यूनभारयुक्तम् अयोगोलकम् अभिज्ञातव्यम् । यदि आरम्भे स्वीकृतयोः गणयोः एव असमः भारः तर्हि पार्श्वद्वये अपि एकैकम् अपनीय भारभेदं परिशील्य न्यूनभारयुक्तम् अयोगोलकम् अभिज्ञातव्यम् ।





७. दश कपालाः पञ्चसु पङ्क्तिषु सन्ति । प्रतिपङ्क्ति पञ्च कपालाः अपि दृश्यन्ते ।





# मारीचस्य बुद्धिमत्ता

पूर्वं चन्द्रसेननामकः महाराजः त्रिपुरदेशम् उत्तमरीत्या परिपालयति स्म । राज्ये नगरप्रदेशेषु, ग्रामप्रदेशेषु च अधिकारिणः नियोजयति स्म । चतुर्षु वर्षेषु एकवारं तेषां परिवर्तनं करोति स्म च । अन्यच्च आधिकारिणां दोषं यः कोऽपि महाराजं वक्तुम् अवकाशं कल्पितवान् आसीत् सः ।

त्रिपुरराज्ये अमृतपुरनामकः ग्रामः आसीत् । तस्मिन् ग्रामे सर्वे अक्षरज्ञाः, बुद्धिमन्तः, समर्थाः च आसन् । तत्र लम्बोदरनामकं कञ्चित् अधिकारिणं नियोजितवान् चन्द्रसेनः । लम्बोदरः अतीव अहङ्कारी आसीत् । जनाः सर्वे स्ववचनानुसारम् एव व्यवहरेयुः इति तस्य आशयः आसीत् ।

अमृतपुरजनाः लम्बोदरस्य एतादृशं व्यवहारं न इष्टवन्तः । अतः ते सर्वे मिलित्वा, परस्परं चर्चां कृत्वा, स्वनायकत्वेन समबाहुनामकं चितवन्तः ।

समबाहुः ग्रामस्थानां प्रतिनिधित्वेन लम्बोदरेण सह चर्चां करोति स्म । समबाहुः ग्रामस्थानां नायकः इति कारणतः लम्बोदरः किञ्चित्कालं तस्मिन् गौरवं प्रदर्शितवान् । समबाहुः तु भयं विना वस्तुनिष्ठरूपेण सर्वं लम्बोदरं वदति स्म । एतस्मात् लम्बोदरस्य अहङ्कारस्य आघातः भवति स्म । अतः सः समबाहुं विविधरीत्या पीडयितुम् उद्युक्तः अभवत् ।

केषाञ्चित् दिनानाम् अनन्तरं लम्बोदरः समबाहुं ग्रामात् निष्कासितवान् । एतं विषयं ज्ञात्वा ग्रामस्थाः सर्वे - 'भवान् एव ग्रामं त्यक्त्वा गच्छतु' इति लम्बोदरं सूचितवन्तः । तदा लम्बोदरः सैनिकानां साहाय्यार्थं महाराजं प्रार्थितवान् ।

वस्तुस्थितिं ज्ञातुं चन्द्रसेनः स्वयमेव अमृतपुरम् आगतवान् । सः प्रवृत्तं सर्वं



ज्ञात्वा लम्बोदरम् एव दण्डितवान् ।

लम्बोदरः भयेन स्वस्य अपराधान् अङ्गीकृत्य - ''इतः परम् उत्तमरीत्या व्यवहरिष्यामि'' इति महाराजं निवेदितवान् ।

परन्तु समबाहुः अमृतपुरे लम्बोदरस्य स्थितिं न अङ्गीकृतवान् । ''लम्बोदरस्य स्थाने अन्यः अधिकारी नियोजनीयः'' इति सः अनुरोधपूर्वकम् उक्तवान् ।

तदा महाराजः ग्रामस्थान् उक्तवान् - ''एकस्मिन् ग्रामे चत्वारि वर्षाणि यावत् एकः अधिकारी कार्यं कुर्यात् एव । लम्बोदरस्य वर्षद्वयं समाप्तम् अस्ति । अतः तस्य अवधेः समाप्तिपर्यन्तं सः एव अधिकारी भवतु'' इति ।

तस्य वचनं श्रुत्वा समबाहुः ग्रामस्थानां प्रतिनिधित्वेन - ''प्रभो ! लम्बोदरेण ये अपराधाः कृताः ते अपराधाः अधिकारस्थाने स्थितैः न करणीयाः एव । ग्रामे सर्वे विद्यावन्तः इति कारणतः सर्वं ज्ञातुं शक्ताः । यदि भवान् लम्बोदरं क्षाम्यति तर्हि अन्ये अधिकारिणः अपि अपराधं कुर्वन्तः एव भवन्ति । यावत् भवान् तेषाम् अपराधं ज्ञात्वा क्षमां करोति तावत् पुनः ते अधिकारस्थाने एव कार्यं कुर्वन्तः भवन्ति । अतः भवान् लम्बोदरं स्थानच्युतं करोति चेत् अन्ये अधिकारिणः अपि अपराधं कर्तुं भयम् अनुभवन्ति एव'' इति उक्तवान् ।

समबाहोः वचनानि न्याययुक्तानि इति विचिन्त्य महाराजः तत्क्षणे एव लम्बोदरं स्थानात् उच्चाटितवान् । तस्य स्थाने नूतनाधिकारिणं नियोजयितुं तेन प्रयत्नः कृतः । परन्तु 'अमृतपुरस्य जना दुष्टाः' इति लम्बोदरः सर्वत्र अपप्रचारं कृतवान् । अतः वस्तुस्थितिम् अज्ञात्वा अन्ये अधिकारिणः अपि तं ग्रामम् आगन्तुं न इष्टवन्तः ।

एतादृशसन्दर्भे अनन्यगतिकः महाराजः समबाहुम् आहूय उक्तवान् - ''भवान् ग्रामनायकत्वेन ग्रामस्थैः चितः अस्ति । इदानीं भवान् एव ग्रामाधिकारी भवति चेत् ग्रामस्थानां हितं भविष्यति'' इति ।

समबाहुः महाराजस्य वचनम् अनङ्गीकुर्वन् - ''प्रभो ! मां क्षाम्यतु । ग्रामाधिकारिणः अन्याय्यं विरोद्धुम् अहं प्रजानायकः आसम् । इदानीं यदि अहं ग्रामाधिकारी भविष्यामि तर्हि मां सर्वे 'स्वार्थी' इति, ग्रामाधिकारी भवितुम् एव

एषः कलहं सृष्टवान् इति च वदेयुः । न केवलं मम, अपि तु ग्रामे कस्यापि स्थानविषये व्यामोहः नास्ति । अतः अस्मान् विहाय अन्यं यं कमपि भवान् नियोजयितुम् अर्हति । अस्मिन् विषये अस्माकं विरोधः नास्ति एव । परन्तु यः कोऽपि अधिकारी भवतु नाम, सः नियमविरुद्धं व्यवहरति चेत् वयं विरोधं करिष्यामः'' इति उक्तवान् ।

महाराजः समबाहोः निःस्वार्थतां दृष्ट्वा अतीव सन्तुष्टः । अनन्तरं सः महाराज्ञ्याः दूरबन्धुं मारीचम् आहूय सूचितवान् - ''भवन्तम् अमृतपुरस्य ग्रामाधिकारित्वेन नियोजितवान् अस्मि । तत्र समबाहुः नाम ग्रामनायकः अस्ति । तेन सह भवान् समीचीनरीत्या व्यवहरति चेत् भवतः किमपि कष्टं न भवेत्'' इति ।

सः मारीचः विद्यावान्, बुद्धिमान्, सामर्थ्यवान् च आसीत् । तस्यापि स्थानव्यामोहः न आसीत् । परन्तु महाराजस्य वचनं निराकर्तुं सः न शक्तवान् । अतः सः ग्रामाधिकारी सन् अमृतपुरं गतवान् । मारीचस्य शासनकाले ग्रामस्य अभिवृद्धिः वेगेन जाता । मारीचः समबाहुः च स्नेहेन व्यवहरतः स्म । एवम् एव त्रीणि वर्षाणि अतीतानि ।

एकदा महाराजः मारीचाय राजधानीम् आगन्तुं वार्तां प्रेषितवान् । यदा मारीचः राजधानीं गतवान् तदा महाराजः तम् उक्तवान् - ''वर्षानन्तरं भवतः अधिकारावधिः समाप्यते । नूतन-ग्रामाधिकारिणः चयनं करणीयम् अस्ति ।



भवान् यं कमपि योग्य जन षण्मासाभ्यन्तरे सूचयतु । अन्यथा अहम् एव योग्यस्य अधिकारिणः चयनं करिष्यामि'' इति ।

तदा मारीचः विनयेन - ''प्रभो ! मम अधिकारावधौ अमृतपुरजनाः सर्वे सुखसन्तोषेण सन्ति । अतः अहम् एव पुनः यदि अधिकारी भवेयं तर्हि उत्तमं भवेत् इति भाति मम । तस्य ग्रामस्य ग्रामजनानां च विषये मम अत्यन्तम् अभिमानः अस्ति'' इति महाराजम् उक्तवान् ।

एतत् श्रुत्वा चन्द्रसेनः अनङ्गीकारपूर्वकं शिरः चालयन् - ''केभ्यश्चित् दिनेभ्यः पूर्वम् अधिकारविषये भवतः व्यामोहः न आसीत् । इदानीं भवान् अधिकारस्थानं त्यक्तुं न इच्छति । एतत् सज्जनस्य लक्षणं न । अधिकारविषये यः नियमः अस्ति तं



नियमम् अहं पालयामि'' इति उक्तवान् ।

तदा मारीचः - ''प्रभो ! अधिकारे मम तु व्यामोहः नास्ति । यस्य व्यामोहः भवति सः अमृतपुरे जीवनं कर्तुं न शक्नोति । अहम् इच्छामि चेत् पुनः चत्वारि वर्षाणि तत्रैव कार्यं कर्तुं यथा भवान् सूचयेत् तथा कुर्याम् । परन्तु तथा करणे मम इच्छा नास्ति । अतः भवतः वचनं शिरसा वहामि'' इति उक्त्वा अमृतपुरं गतवान् ।

तस्मात् दिनात् मारीचस्य व्यवहारे महत् परिवर्तनं जातम् । सः समबाहोः सर्वेषु कार्येषु दोषान्वेषणं करोति स्म । समबाहुं बहुधा पीडयति स्म च । समबाहुः अपि मारीचस्य विरुद्धं वचनानि वदति स्म । मारीचस्य विषये जनाः यथा क्रोधं प्रकटयेयुः तथा ग्रामस्थान् प्रचोदितवान् सः । परन्तु मारीचः समबाहुं विना अन्यैः ग्रामस्थैः सह उत्तमरीत्या एव व्यवहरति स्म । एतत् सर्वं दृष्ट्वा खिन्नः समबाहुः महाराजं निवेदितवान् ।

वस्तुस्थितिं ज्ञातुं महाराजः अमृतपुरम् आगतवान् । समबाहुः तम् उक्तवान् - ''मारीचं स्थानच्युतं करोतु'' इति ।

तदा चन्द्रसेनः तं पृष्टवान् - ''मारीचस्य अपराधः कः ?'' इति ।

''अहं ग्रामनायकः अस्मि इति तस्य असूया अस्ति । अतः सः मया सह अनुचितं व्यवहरति'' इति समबाहुः उक्तवान् ।

तदा मारीचः उक्तवान् - ''प्रभो ! 'अहं ग्रामनायकः' इति चिन्तयन् समबाहुः अहङ्कारेण व्यवहरति । तस्य व्यवहारानुसारं मया अपि व्यवह्रियते । एतत् तु वैयक्तिकम् अस्ति । अहम् अन्यैः सह अपि एवम् एव व्यवहरामि इति यदि सिद्धं भविष्यति तर्हि अनुक्षणम् एव पदवीं त्यक्ष्यामि'' इति ।

सर्वं विचार्य चन्द्रसेनः - ''भवन्तौ उभौ अपि सज्जनौ, समर्थौ च । भवतोः मध्ये भिन्नाभिप्रायः उद्भूतः चेत् तेन अन्येषां यथा कष्टं न भवेत् तथा भवद्भ्यां एव दूरीकरणीयः'' इति उभौ अपि उपदिष्टवान् ।

तदा मारीचः उक्तवान् - ''उभाभ्याम् अपि दोषः कृतः एव । इतः परं यथा एवं न भवेत् तथा अहं व्यवहरामि'' इति ।

समबाहुः अपि एतदेव वचनम् उक्तवान् । अनन्तरं महाराजः मारीचस्य अधिकारावधिं चत्वारि वर्षाणि अधिकं कृत्वा राजधानीं गतवान् ।

चन्द्रसेनस्य द्वारा सर्वान् विषयान् ज्ञात्वा मन्त्री तं पृष्टवान् - ''प्रभो ! यदा मारीचः 'अधिकारावधिं अधिकं करोतु' इति प्रार्थितवान् आसीत् तदा भवता न अङ्गीकृतम् आसीत् । तदा मारीचस्य अपराधः कोऽपि न आसीत् । लम्बोदरस्य दोषकारणतः भवान् तं पदच्युतं कृतवान् । परन्तु इदानीं मारीचेन दोषः कृतः चेदपि भवान् तस्य अधिकारावधिं विस्तारितवान् । सः भवतः बन्धुः इत्येतत् एव अत्र कारणं स्यात् वा ?'' इति ।

मन्त्रिणः वचनं श्रुत्वा चन्द्रसेनः हसन् उक्तवान् - ''लम्बोदरः ग्रामस्थान् पीडयति स्म । सः अधिकारस्य दुरुपयोगं कृतवान् । अतः सः क्षमार्हः न आसीत् । लम्बोदरस्य अपप्रचारकारणतः 'अमृतपुरग्रामजनाः दुष्टाः' इति अन्ये चिन्तितवन्तः । अतः सर्वेऽपि अधिकारिणः तं ग्रामं गन्तुम् अनिच्छां प्रकटयन्ति स्म । मारीचः समर्थः इति कारणतः अनुरोधेन तं तत्र अहम् एव प्रेषितवान् । तत्रत्याः सर्वेऽपि तम् इष्टवन्तः च । सः ग्रामस्याभिवृद्धिं कृतवान् । पूर्वं ये तत्र गमनं निराकृतवन्तः आसन् ते अपि इदानीं तं ग्रामं गन्तुं सिद्धाः सन्ति । अतः तस्य कालावधिः न विस्तारणीयः इति मम चिन्तनम् आसीत् । परन्तु मारीचः चतुरः अस्ति । सः वस्तुस्थितिं ज्ञात्वा बुद्ध्या कलहं सृष्टवान् । अमृतपुरे सर्वेषु विषयेषु भ्रमम् उत्पादितवान् । समबाहुः अपि कुपितः अभवत् । अतः पुनः अधिकारिणः तत्र गन्तुं न इष्टवन्तः । इदानीं मारीचस्य स्पर्धी कोऽपि नास्ति । अतः तस्य अधिकारावधिः अधिकः जातः । अत्र समबाहोः अपि सहकारः स्यात् इति मम संशयः । एतस्मात् मया कश्चन अंशः ज्ञातः यत् ग्रामाधिकारिणः 'अधिकारावधिः निश्चितः न भवेत् । एषः उचितः नियमः न इति । यः अविवेकी, असमर्थः च भवति सः सप्ताहचतुष्टयम् अपि अधिकारं कर्तुं न अर्हति । यः विवेकी, समर्थः, प्रजाप्रियः, च भवति सः आजीवनम् अपि अधिकारपदम् अलङ्कर्तुम् अर्हति'' इति ।

तदा मन्त्री - ''प्रभो ! मम संशयः अपगतः । समबाहु-मारीचयोः अपेक्षया भवान् एव चतुरः इति मम भाति'' इति श्लाघनपूर्वकम् उक्तवान् ।






# लक्ष्म्याः अनुग्रहः

मधुरानगरे राघवनामकः कश्चन ब्राह्मण-बालकः आसीत् । यद्यपि सः अनाथः निर्धनः च, तथापि सः अन्यान् न याचते स्म । ग्रामे स्थिते वैष्णवदेवालये वासं कृत्वा, देवं भक्त्या पूजयन् तत्र प्राप्यमाणेन प्रसादेन उदरपोषणं करोति स्म सः ।

अथ कदाचित् रात्रौ लक्ष्मीदेवी स्वप्ने प्रत्यक्षीभूय - ''वत्स ! भवतः उपरि करुणा आगता अस्ति । अतः अहं भवता सह तिष्ठन्ती ऐश्वर्यं दास्यामि'' इति उक्तवती ।

तदा राघवः देवीं नमस्कृत्य उक्तवान् - ''अम्ब । भवती मयि कृपां दर्शितवती यत् तदर्थम् अहं धन्योऽस्मि । परन्तु एतावत्पर्यन्तं भवत्याः अनुग्रहः न आसीत् इति कारणात् एव अहं निश्चिन्ततया जीवनं यापितवान् । अतः मत्तः अन्यस्य क्लेशः न आसीत्, अन्यतः ममापि क्लेशः न आसीत् । अर्चकेन दत्तेन प्रसादेन उदर-पोषणं कुर्वन् आसम् । एतत् निश्चिन्तजीवनम् एव मह्यं रोचते । अतः भवतीं सविनयं वक्तुम् इच्छामि यत् इदानीं भवत्याः आवश्यकता नास्ति मम'' इति ।

राघवस्य वचनं श्रुत्वा लक्ष्मीदेवी कोपेन - ''मूर्ख ! विधिलिखितं परिवर्तयितुं सर्वथा न शक्यते । अतः अहं भवन्तम् एव वृणोमि'' इति उक्तवती ।

''अम्ब । एवं तर्हि भवती मां त्यक्त्वा कदा गमिष्यति इति वा वदतु'' इति प्रार्थितवान् राघवः ।

''भवन्तम् अनुक्त्वा न गमिष्यामि'' इति उक्त्वा देवी तं गमनसूचकम् एकम् अभि-ज्ञानम् अपि उक्त्वा ततः अदृश्या अभवत् ।

अनन्तरदिने एव एकः धनिकः तं देवालयं प्रति आगतवान् । राघवं दृष्ट्वा नितरां प्रभावितः सः तं नमस्कृतवान् । तेन सह आगताः जनाः अपि तथैव कृतवन्तः ।

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

ते राघवाय कौशेयवस्त्रम् अर्पितवन्तः, कण्ठे पुष्पहारं स्थापितवन्तः च । पूजायाः अनन्तरम् अन्नसन्तर्पणम् अपि प्रवृत्तम् ।

देवस्य प्रसादं विना कदापि अन्यत् किमपि असेवितवान् राघवः - 'देवी यथा उक्तवती तथैव कुर्वती अस्ति' इति चिन्तयन् एव भोजनं कृतवान् । रात्रिपर्यन्तं धनिकस्य गृहे भजनं प्रवृत्तम् । यदा सर्वं समाप्तं तदा राघवः - ''अहो ! इदानीं मया धनिकात् मुक्तिः प्राप्ता'' इति स्वगतं वदन् 'देवीतः अपि मुक्तिः प्राप्तव्या' इति चिन्तयन् ततः प्रस्थाय महाराजस्य दुर्गं प्रविष्टवान् । तिलकेन, कौशेयवस्त्रेण, पुष्पहारेण च शोभितं राघवं 'वैकुण्ठात् अवतीर्णः देवः एव' इति चिन्तयन्तः रक्षकभटाः तस्य दुर्गप्रवेशार्थम् अवरोधं न कृतवन्तः एव ।



राघवः कमपि अवरोधं विना साक्षात् प्रासादस्य अन्तः गतवान् । तत्रत्यान् प्रकोष्ठान् अतिक्रम्य अन्ते अन्तःपुरं प्रविष्टवान् सः । तत्र एकस्मिन् मञ्चे महाराजः, अनतिदूरे अपरस्मिन् मञ्चे राज्ञी च शयनं कृतवन्तौ आस्ताम् ।

राघवः राज्ञ्याः हस्तं गृहीत्वा मञ्चात् भूमिं प्रति आकृष्टवान् । तदा सा उच्चैः आक्रन्दनं कृतवती । तं शब्दं श्रुत्वा उत्थितः महाराजः 'कोऽपि पत्नीम् आकर्षन् अस्ति' इति ज्ञात्वा खड्गं गृहीतवान् । तावति काले राज्ञ्याः मञ्चात् एकः महान् सर्पः महाराजस्य पार्श्वे पतितः । महाराजः खड्गेन तं सर्पं मारितवान् ।

''अस्मान् रक्षितुम् अस्मिन् समये प्रत्यक्षः जातः महाविष्णुः इव अस्ति भवान् । वस्तुतः भवान् कः ?'' इति महाराजः भक्त्या राघवं पृष्टवान् ।

''मम नाम राघवः'' इति उक्तवान् राघवः ।

महाराजाय राघवस्य व्यवहारः नितराम् अरोचत । अतः राजा नगरे एकं बृहत् गृहं तस्मै दत्त्वा प्रार्थितवान् यत् भवान् अत्रैव वासं करोतु कृपया इति । लक्ष्मीदेवीं पराजेतुं न शक्यते इति चिन्तयित्वा राघवः महाराजस्य निवेदनम् अङ्गीकृतवान् ।

गच्छता कालेन राघवस्य सम्पत्तिः वर्धिता अभवत् । महाराजस्य परिवारजनाः अपि तस्मिन् आदरप्रदर्शनम् आरब्धवन्तः ।

प्रतिदिनं सः अपरिमितानि उपायनानि कुतश्चित् प्राप्नोति स्म । कश्चित् महाजनः तस्मै सुन्दरीं स्वपुत्रीं दत्त्वा तस्य विवाहं

अपि जाताः । लक्ष्मीदेव्याः निमित्तं राघवः एकां बृहत्पेटिकां सज्जीकृतवान् आसीत् । सा तत्रैव लुण्ठनं कुर्वती वसति स्म । एवं द्वादश वर्षाणि अतीतानि ।

एकदा सायङ्काले राघवस्य पत्नी अट्टात् अवतरन्ती - "दीपः नास्ति, किमपि नास्ति । वराकाः सर्वे कुत्र गताः ?" इति आक्रोशितवती कोपेन । "एतत् वचनम् एव निर्गमनसूचकम्" इति पूर्वम् एव राघवम् उक्तवती आसीत् लक्ष्मीदेवी । राघवः मनसि एव देवीं नमस्कृत्य - "भवती गच्छति वा अम्ब । गच्छतु नाम" इति उक्त्वा पत्नीम् आहूय - "मां किमपि मा पृच्छतु । पेटिकायां विद्यमानं सर्वं स्वीकृत्य भवती पुत्राः च कुत्राऽपि गच्छन्तु" इत्युक्त्वा तस्मिन् दिने रात्रौ तान् प्रेषितवान् । तदा आत्मना सह राघवम् अपि नयति स्म । यस्मिन् दिने पत्नी पुत्राः च गृहात् निर्गताः तदनन्तरदिने एव महाराजेन सह राघवः अपि मृगयार्थं गतवान् । मध्याह्नाभ्यन्तरे एव सर्वे श्रान्ताः अभवन् । एकस्य वृक्षस्य अधः महाराजः राघवस्य अङ्के शिरः स्थापयित्वा निद्रां कृतवान् । अन्ये सर्वे विश्रान्तिसुखम् अनुभवन्तः आसन् ।

तदा अनिरीक्षिततया कश्चन काकः महाराजस्य कण्ठस्य उपरि मलं विसृष्टवान् । गाढनिद्रायाः कारणात् महाराजस्य जागरणं न अभवत् । 'विना कम्पनं कथं काकविष्ठा अपनेतव्या' इति न ज्ञातवान् राघवः । सः दीर्घसमयं यावत् चिन्तनं कृतवान् । तस्मिन् समये तेन महाराजस्य लघुछुरिका दृष्टा । राघवः छुरिकां स्वीकृत्य राज्ञः कण्ठे विद्यमानां



मारयितुम् उद्युक्तः अभवत् ।

तत्क्षणे एव जागरितः महाराजः नेत्रे उद्घाट्य राघवस्य हस्ते स्थितां छुरिकां दृष्ट्वा "द्रोहिन्, द्रोहिन् !" इति आक्रोशनं कृतवान् । राजभटाः वेगेन आगतवन्तः ।

"मम आश्रये स्थित्वा, माम् एव मारयितुम् उद्युक्तः वा भवान् ? धिक् भवन्तम् !" इति राघवम् उक्त्वा भटान् उद्दिश्य - "अये भटाः, एतस्य बन्धनं कुर्वन्तु भवन्तः" इति आज्ञापितवान् राजा । भटाः राघवस्य हस्तद्वयमपि बद्ध्वा तं नगरं प्रति नीतवन्तः । अनन्तरदिने विचारणं प्रवृत्तम् । सभायां राघवस्य उपरि स्थितं राजद्रोहस्य आरोपणं निरूप्य - "भवता किमपि वक्तव्यम् अस्ति वा ?" इति पृष्टवान् राजा ।

"अहं किमपि न वदामि । भवान् यथा इच्छति तथा दण्डनं विधातुम् अर्हति" इति उक्तवान् राघवः ।

"भवते अग्निदण्डनं दत्तवान् अस्मि । भवतः अन्तिमा इच्छा का इति वदतु । ताम् इच्छां पूरयामि" इति उक्तवान् महाराजः ।

तदा राघवः - "मम गृहे एका महती पेटिका अस्ति । तस्याम् एका कांस्यस्य पेटिका अस्ति । तस्यां पेटिकायां मम सम्पत्तिः अस्ति । तत् एकवारं द्रष्टुम् इच्छामि । अनन्तरं भवान् मां शूलम् अपि आरोपयितुम् अर्हति" इति उक्तवान् ।

राजोद्योगिनः तस्य गृहं गत्वा महतीं पेटिकाम् उद्घाटितवन्तः । तत्र विशिष्टवस्तु किमपि न आसीत्, अपि तु एकः लघुस्यूतः आसीत् । राजभटाः तं स्यूतम् आनीय राजसभायाम् उद्घाटितवन्तः । तत्र एका वेष्टी, लघु कलशः च आसीत् । "एषा एव भवतः सम्पत्तिः वा ?" इति पृष्टवान् महाराजः । "आं, प्रभो ! तस्मिन् यदा विश्वसितवान् आसं तदा अहं कष्टमेव न जानामि स्म । तावति काले लक्ष्मीदेव्याः अनुग्रहः जातः । तत् शाश्वतं नास्ति, कदाचित् एतादृशी स्थितिः आगच्छेत् इति चिन्तयन् अहम् आसम् । एतदुभयं भवान् मह्यं ददाति चेत् इतः गच्छामि" इति उक्तवान् राघवः ।

महाराजः वस्तुस्थितिं ज्ञात्वा करुणया तस्मै दत्तं दण्डनं प्रतिस्वीकृत्य तं सत्कृत्य प्रेषितवान् ।



रूप्यकाणि

विजितां शीर्षिकां डिसेम्बर् - १९९६ मासे प्रकटयिष्यामः ।



MAHANTESH C. MORABAD



MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

**'अगस्ट्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **भावचित्रार्थं किं भवती सन्नद्धा ?**

द्वितीयचित्रम् - **आं, भावचित्रार्थं स्मः वयं सन्नद्धाः ।**

प्रेषिका - कु. सुधा पण्डित, ३५८, नानापेठ, सन्तकबीर चौक, कबीरभवनम्, पुणे-४११००२

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००
विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -
**डाल्टन् एजन्सीस्,** चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India), Controlling Editor: NAGI REDDI.